# वाक्यजिज्ञासा – २

(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति। तस्य अधः तत्सम्बद्धं विवरणं भवति। ततः अन्यत् वाक्यं, पुनः विवरणम्। एवम् अत्र क्रमः। विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते। अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते। शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः। तादृशाः, वाक्येन वाक्यद्वयेन वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम्। तावता एव 'किं शुद्धम्' इति ज्ञायते। 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम्।)

**८. किञ्चित् धनम् अवश्यकम् आसीत्।**

० **'आवश्यकम्'** इति प्रयोक्तव्यम् अत्र, न तु अवश्यकम् इति। अवश्यशब्दस्य यः अर्थः स एव अर्थः (निस्सन्देहम्/निश्चयेन इति) अवश्यकशब्दस्य अपि भवितुम् अर्हति। प्रकृते सन्दर्भे स च अर्थः न सङ्गच्छते। अवश्यस्य भावः आवश्यकम्। वुञ्प्रत्ययः अत्र। 'तद्धितेष्वचामादेः' (७.२.११७) इति आदिवृद्धिः। आवश्यकम् अस्य अस्ति इति आवश्यकः। 'अर्श आदिभ्यो अच्' (५.२.१२७)। तथा हि भाष्यप्रयोगः* – 'नैतयोः आवश्यकः समावेशः' इति।

**९. एषा लेखनी आवश्यका वा?**

० 'आवश्यका' इति अपशब्दः। **'आवश्यिका'** इति, **'आवश्यकी'** इति वा प्रयोक्तव्यम्।

**१०. मया त्वरया गन्तव्यम्। मित्राणि मम प्रतीक्षां कुर्वन्तः सन्ति।**

० 'मित्राणि प्रतीक्षां **कुर्वन्ति** सन्ति' इति प्रयोक्तव्यम्। मित्रशब्दः नपुंसकलिङ्गे। कुर्वच्छब्दः तस्य विशेषणम्। विशेष्यानुगुणं विशेषणस्यापि नपुंसकलिङ्गत्वम् एव भवेत्। 'मित्राणि' इति बहुवचनप्रयोगात् 'कुर्वन्ति' इत्यपि बहुवचनप्रयोगः। कृञ्धातोः वर्तमानकालबहुवचनरूपम् अपि 'कुर्वन्ति' इति एव। तदेव रूपम् अत्र इति न भ्रमितव्यम्। एतस्मिन् वाक्ये प्रयुक्तं तु तकारान्तनपुंसकलिङ्गस्य बहुवचनान्तं रूपम्।

---

* 'तदस्य अस्ति अस्मिन् इति मतुप्' इति सूत्रस्य (५.२.९४) भाष्यसन्दर्भे।

'मित्रभूताः जनाः पुरुषाः। ते प्रतीक्षमाणाः सन्ति' इत्याशयेन 'कुर्वन्तः' इति पुल्लिङ्गप्रयोगः कृतः स्यात्। किन्तु पुल्लिङ्गविशिष्टः तादृशः विशेष्यभूतः शब्दः कोऽपि न उपात्तः। उपात्तः तु नपुंसकलिङ्गयुक्तः मित्रशब्दः। अतः तदनुगुणं कुर्वच्छब्दस्य अपि नपुंसकलिङ्गता एव स्यात्।

**११. कृष्णस्य मित्रं रामः उक्तवान्।**

- रामस्य विशेषणं मित्रशब्दः। मित्रशब्दः तु नियतलिङ्गः। (तन्नाम विशेष्यानुगुणं तस्य लिङ्गपरिवर्तनं न भवति।) अतः पुल्लिङ्गविशिष्टस्य रामशब्दस्य विशेषणत्वे अपि मित्रशब्दस्य न पुंस्त्वम्।

  एवं तर्हि – यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य।

  तल्लिङ्गं तद्वचनं सा च विभक्तिः विशेषणस्यापि।। इत्येतस्य नियमस्य भङ्गः जातः खलु इति तु न भ्रमितव्यम्। श्लोकोक्तः नियमः विशेष्यनिघ्नानां विषये (विशेष्यानुगुणं विभिन्नलिङ्गेषु रूपं प्राप्नुवताम् उत्तमदीर्घादिशब्दानां) विषये अन्वेति, न तु नियतलिङ्गस्थले। अतः रामशब्दस्य पुंस्त्वं, मित्रशब्दस्य नपुंसकत्वम् इत्येव व्यवस्था। रामशब्दस्य पुंस्त्वात् 'उक्तवान्' इति पुल्लिङ्गविशिष्टं कृदन्तरूपम् अपि युक्तम् एव।

**१२. एषः मम मित्रः रमेशः।**

- 'मित्रः रमेशः' इति प्रयोगः दोषाय। **'मित्रं रमेशः'** इति प्रयोक्तव्यम्। 'सुहृत्'(Friend) इत्यस्य अर्थस्य वाचकः मित्रशब्दः नपुंसके एव। पुल्लिङ्गविशिष्टः मित्रशब्दः तु सूर्यं बोधयति, न तु सुहृदम्। तथा च कोषः– 'अथ मित्रं सखा सुहृत्' इति, 'द्युमणिः तरणिः मित्रः' इतिं च।

**१३. लक्ष्मी भगवतः विष्णोः पत्नी।**

- 'लक्ष्मी' इति अपशब्दः। **'लक्ष्मीः'** इति प्रयोक्तव्यम्। गौरी इत्यादिषु विसर्गस्य अश्रवणात् लक्ष्मीशब्दस्य अपि प्रयोगं भ्रान्त्या विसर्गेण विना कुर्वन्ति। गौरी इत्यादयः शब्दाः ङ्यन्ताः। अतः 'हल्ङ्याभ्यो....' (६.१.६८) इत्यनेन सूत्रेण सुप्रत्ययस्य लोपः भवति। लक्ष्मीशब्दः तु न ङ्यन्तः।अतः सुलोपः न भवति। तस्मात् विसर्गस्य श्रवणम्।

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'    सञ्चालकः– 'नागिरेड्डी'

**प्रा**चीनकालात् अपि लोके युद्धानि प्रचलन्ति। किन्तु प्राचीनकालीनस्य युद्धस्य एतत्कालीनस्य युद्धस्य च मध्ये महान् भेदः अस्ति।

प्राचीने काले युद्धस्य परिणामः जयः वा पराजयः वा भवति स्म। ययोः देशयोः युद्धं तौ केवलं युद्धफलस्य अनुभोक्तारौ।

किन्तु इदानीं परिणामः सर्वथा भिन्नः दृश्यते। परिणामदृष्ट्या जयः पराजयः वा सर्वथा गौणः अस्ति। युद्धस्य दुष्परिणामः समग्रेण प्रपञ्चेन एव अनुभोक्तव्यः अस्ति इदानीम्। कुटिलानि तन्त्राणि अपायकारीणि अस्त्राणि च बहुधा उपयुज्यन्ते। एतस्य फलं– वायोः, जलस्य, परिसरस्य च कालुष्यम्। वायुजलादिभिः विना जीवितुम् अशक्नुवन् मानवः किं वा कुर्यात्? यत् उपलभ्यते तदेव सेवते। एवम् अनिच्छन् अपि विषं सेवते सः। मूकजन्तूनाम् अपि एषा एव दुरवस्था। एषा स्थितिः यत्र युद्धं प्रचलति तत्र केवलम् इति न, समग्रे प्रपञ्चे दृश्यते।

एतादृशं दुष्परिणामकारकम् एकं युद्धं सद्यः एव समाप्तम्। युद्धस्य दुष्परिणामाः के इति इतोऽपि न ज्ञातम्। कालुष्यादीनां निवारणं कदा भवेत् इति तु देवः एव जानाति।

सम्पुटः–८    मे–१९९१    सञ्चिका–२

प्रतिकृतिमूल्यं रू. ३-००  *  वार्षिकं ग्राहकशुल्कं रू. ३६-००











मैगी ऑपरेशन वाइल्डलाइफ गेम'
इत्यनेन सार्धं वन्यजीवान् संरक्षन्तु।




'मैगी किंग ऑफ् दी जंगल गेम्'

# मैगी क्लब् निःशुल्कं उपहारान् वितरति आनन्द-सन्दोहं प्रापयति!



'मैगी जादू जंगल

आगच्छन्तु बालाः! मैगीक्लबे प्रविशन्तु, वर्षं यावत् आनन्दं अनुभवन्तु। वृत्तपत्राणि, उपहाराः, क्रीडकानि, आमोद-प्रमोदस्य अनेकानि साधनानि।

भवन्तः एतत् मैगी नूडल्स्-पुटकानां पञ्चानां रिक्त-आवरणानां मुखपृष्ठात् निस्काष्य अस्मान् प्रेषयन्तु। सहैव स्वीयं नाम-धाम, स्वेष्टं उपहारं च लिखन्तु। अपि च, यदि भवान् मैगी-क्लब्-सदस्यः नास्ति चेत्, अनुपमोऽयं अवसरः। उपरितन-विवरणप्रेषण-काले सदस्यतायै लिखन्तु। वयं भवतः उपहारेण सह निःशुल्कं मैगी-क्लब्-सदस्यता-पत्रं प्रेषयिष्यामः।




मैगी बर्ड-हाउसं विरचयन्तु।




आर्ची-प्रहसनं!

*अस्माकं संकेतः*

**मैगी क्लब्**
पो. ओ. बॉक्सः 5788,
नई दिल्ली-110 055

निः शुल्कं! मैगी "वर्ल्ड ऑफ एनीमल्स्" - प्रश्नोत्तर-पुस्तिका.

भवान् यत् उपहारत्रयं संचेष्यति तेन सार्धं निःशुल्कं 'वर्ल्ड ऑफ एनीमल्स्' - प्रश्नोत्तर-पुस्तिका, वन्य-प्राणिनां विषये रुचि-वर्धिका तथ्योद्घाटिका च। प्रत्येकमपि क्रीडाविषये विस्तरं अवधानेन परीक्ष्यताम्।









अपरोऽपि प्रस्तावः - नाद्यनावधि "लॉर्ड ऑफ दी जंगल गेम" अधिगतम्, चेत्तदा शीघ्रं आददातु।

HTA 7105SAN

# इस्रेल् उपरि आक्रमणं किमर्थम्?

एशियाखण्डे मध्यप्राच्यभागे 'खातयुद्धं' तदर्थम् आरब्धं यतः इराक्देशेन प्रतिवेशी स्वतन्त्रः देशः कुवैत् दुराक्रमणद्वारा स्वायत्तीकृतः आसीत्। कुवैत्देशः परित्यक्तव्यः इति अमेरिकादेशेन इराक्देशः प्रार्थितः। किन्तु इराक्देशेन एषः प्रस्तावः स्पष्टैः वचनैः निराकृतः। एतस्य परिणामतः बहुराष्ट्रियाः सेनाः सम्मिलिताः। अमेरिकादेशस्य नायकत्वे बहुराष्ट्रियसेनया युद्धम् उद्घुष्टम्।

इराक्देशस्य उपरि आक्रमणार्थं यैः सैन्यं प्रेषितं तेषु इस्रेल् न अन्तर्भवति। तथापि युद्धस्य आरम्भे एव इराक्देशेन इस्रेल् उपरि क्षेपण्यः क्षिप्ताः। किमर्थं तेन एवं कृतम्?

इस्रेल् यहूदीयानां राष्ट्रम्। शतशः वर्षाणि यावत् यहूदीयाः स्वमातृभूमिवासात् वञ्चिताः आसन्। द्वितीयजागतिकयुद्धसन्दर्भे तेषां परिस्थितिः इतोऽपि शोचनीया जाता। हिट्लरस्य आज्ञायाः अनुगुणं नाझीजनैः कृते मारणहोमे बहवः यहूदीयाः प्राणैः वियुक्ताः जाताः। युद्धस्य समाप्तेः अनन्तरं विश्वसंस्थया यहूदीयानां कृते अरबूजनानां कृते च राज्यस्थापनार्थम् अनुमतिः दत्ता। एवं १९४८ तमे वर्षे 'मे'मासे १४ दिनाङ्के इस्रेलुदेशः उदितः।

किन्तु दौर्भाग्यं नाम अनन्तरदिने एव ईजिप्त्, इराक्, जोर्डान्, लेबिनान् सिरिया च सम्भूय इस्रेल् उपरि आक्रमणं कृतवन्तः। एतच्च दुराक्रमणं इस्रेलुदेशेन धैर्येण

सम्मुखीकृतम्। एतावदेव न, अरबराज्यानां कृते निर्दिष्टे भूभागे कञ्चन भूभागं स्वाधीनम् अकरोत्। किन्तु इस्रेलुदेशस्य कश्चन भूभागः जोर्डान्देशेन, गाजाप्रदेशश्च मिस्रदेशेन च वशीकृतः।

१९६७ तमे वर्षे ईजिप्ट्देशेन इस्रेसुदेशस्य वशीकरणार्थं सन्नाहः कृतः। इराक्-जोर्डान् देशो ईजिप्ट्देशस्य साहाय्यार्थं सिद्धौ आस्ताम्। किन्तु एतदभ्यन्तरे एव इस्रेलुदेशेन मिस्र-जोर्डान्-सिरियादेशानाम् उपरि हठात् आक्रमणं कृतम्। षड् दिनानि यावत् युद्धं प्रवृत्तम्। इस्रेलुदेशेन सिनायीपेनिन्सुलाप्रदेशः मिस्रदेशात् स्वीकृतः। एवम् एव सिरियादेशस्य गोलन् हैट्स्भागः, जोर्डान्देशस्य जोर्डान् नद्याः पश्चिमतटे स्थितः भागश्चापि वशीकृतः।

इदानीन्तने खातयुद्धे तैः देशैः इराक्देशस्य साहाय्यं न कृतं, ये च पूर्वम् इस्रेलुदेशेन युद्धं कृतवन्तः आसन्। वस्तुतः तु इराक्देशेन कुवैत्देशः स्वायत्तीकृतः यत्, तत् मध्यप्राच्यदेशैः न समर्थितम्। 'इस्रेल् उपरि आक्रमणं कृतं चेत् स च देशः कोपेन युद्धार्थम् आगच्छति। तदा च प्रतिवेशिनः देशाः मम साहाय्यं करिष्यन्ति' इति इराक्देशस्य चिन्तनम् आसीत्। किन्तु इराक्देशस्य कुतन्त्रं न फलितम्।





# योग्यं प्रतिफलम्

भरतेशः रमणपुरे कुसीदवाणिज्येन जीवति स्म। तेन प्रभूतं धनं सङ्गृहीतम् आसीत्। 'ऋणस्वीकर्तॄणां कष्टनिवेदने अवधानं न दातव्यम्। धनसङ्ग्रहसमये निर्दाक्षिण्यं व्यवहर्तव्यम्। आगन्तव्यम् अल्पम् अपि धनं न परित्यक्तव्यम्' इति चिन्तयति स्म भरतेशः। अतः एव तावत् धनं सङ्ग्रहीतुं शक्तवान् आसीत् सः। समीपस्थेषु ग्रामेषु अपि तस्य व्यवहारः आसीत्।

कदाचित् नगरं गतः भरतेशः पञ्चषेभ्यः धनं सङ्गृह्य दशसहस्राधिकरूप्यकाणि गृहीत्वा ग्रामं प्रति प्रस्थितवान्। प्रस्थानसमये सूर्यः अस्तं गतः आसीत्। भाटकशकटं न प्राप्तं भरतेशेन। अतः सः पादाभ्याम् एव गन्तुम् उद्युक्तः जातः।

रमणपुरमार्गः न उत्तमः। मार्गे शिलाखण्डाः, गर्ताः, धूलिश्च अधिकाः। अतः जागरूकतया पदं स्थापयन् मन्दं गच्छन् अस्ति भरतेशः। तदा तदा धनं स्पृष्ट्वा तत् सुरक्षितम् अस्ति वा न वा इति परीक्षां करोति। एवम् आतङ्केन गच्छन् सः झटिति एकं विषयं स्मृतवान्।

वीरमल्लः कश्चन महाचोरः। रमणपुरपरिसरः एव तस्य कार्यभूमिः। मार्गे गच्छतां लुण्ठनं, गृहेषु चौर्यं च तस्य वृत्तिः। कः कदा कियत् धनं स्वीकृत्य कुतः प्रस्थानं करोति इति कथमपि जानाति सः। अवकाशं प्राप्य तत् धनं चोरयति च। सप्ताहात् पूर्वं सः कारागारात् मुक्तः आसीत्।

वीरमल्लस्य स्मरणेन भरतेशस्य शरीरे लघु कम्पनम् उत्पन्नम्। तावता अनतिदूरात् श्रुतम्– ''कः सः?'' इति।

'अहो दौर्भाग्यम्! वीरमल्लः एव उपस्थितः इति भाति। आगच्छन् एषः पुरुषः

''सुभद्रा''



आजानुबाहुः इव दृश्यते। अतः वीरमल्लः एव स्यात्। एवं तर्हि मम कथा समाप्ता अद्य' इति चिन्तयन् कम्पमानः भरतेशः तत्रैव स्थितवान्।

सः दृढकायः पुरुषः समीपम् आगत्य- "श्रीमन्! भरतेशवर्यः वा? अहं भद्रकः। क्षेत्रे कार्यं समाप्य गृहं प्रति गच्छन् अस्मि। किमर्थम् एतावता विलम्बेन गृहं प्रत्यागच्छन् अस्ति?" इति पृष्टवान्।

तदा भरतेशः समाधानेन निश्श्वस्य– "ऋणस्वीकर्तृभ्यः धनसङ्ग्रहार्थं प्रातःकालतः अटितवान्। किन्तु एकं रूप्यकम् अपि न प्राप्तम्। वृथा अटनम्। प्रस्थानसमये कथमपि विलम्बः जातः। शकटं न प्राप्तम्। अतः पादाभ्याम् एव प्रस्थितवान्" इति उक्तवान्।

अनन्तरं तौ सहैव अग्रे प्रस्थितवन्तौ। मार्गे काचित् लघुनदी प्राप्ता। भरतेशः हस्तेन वेष्टीं किञ्चित् उन्नीय नद्यां पदानि स्थापितवान्। शिलानां पङ्कस्य च कारणतः सः तत्र स्खलितः। पतन्तं तं भद्रकः हस्तसाहाय्येन उन्नीतवान्।

तावता नद्याः अपरस्मात् तीरतः कठोरः स्वरः श्रुतः– "कः सः तत्र?" इति।

एवं पृच्छन् जनः चोराग्रेसरः वीरमल्लः एव इति ज्ञात्वा भीतः भरतेशः भद्रकस्य कर्णस्य समीपे मुखं नीत्वा– "भद्रक, तदा मया असत्यम् उक्तम्। अद्य सङ्गृहीतानि दशसहस्रं रूप्यकाणि मम समीपे सन्ति। कृपया भवान् इदानीं तानि स्वसमीपे गोपयतु" इति क्षीणस्वरेण उक्त्वा धनस्यूतं भद्रकस्य हस्ते स्थापितवान्।

"भीतिः मास्तु भवतः" इति मन्दस्वरेण वदन् भद्रकः भरतेशेन सह अपरं तीरं प्राप्तवान्।

वीरमल्लः भरतेशस्य समीपम् आगत्य तदीयवस्त्रेषु धनस्य अन्वेषणं कृतवान्। किन्तु किमपि न प्राप्तं तेन। "काऽपि वञ्चना दृश्यते अत्र! अल्पं धनम् अपि अस्वीकृत्य कोऽपि प्रयाणं न करोति। भोः, धनं कुत्र?" इति पृच्छन् भरतेशं गले गृहीतवान् चोरः वीरमल्लः।

भीत्या कम्पमानः भरतेशः– "अहो, हो! भद्रक! रक्षतु माम्" इति सकरुणम् उक्तवान्।

तदा भद्रकः अग्रे आगत्य– "अये, वीरमल्ल! भवतः सामर्थ्यं जानामि अहम्। अहम् अस्मि रमणपुरीयः भद्रकः" इति कोपेन वदन् हस्तस्थितेन कृषिसाधनेन ताडयितुम् उद्युक्तः।

अनिरीक्षितायाः एतस्याः प्रतिक्रियायाः भीतः वीरमल्लः झटिति ततः पलायनं कृतवान्।

अनन्तरं भद्रकः भरतेशेन सह तदीयगृहपर्यन्तम् अपि आगत्य धनस्यूतं प्रत्यर्प्य स्वगृहं गतवान्।

ततः मासः अतीतः। कदाचित् चोरः वीरमल्लः भरतेशसमीपम् आगत्य म्लानवदनः सन् प्रार्थितवान्– "श्रीमन्, भवता अल्पं साहाय्यं करणीयम्" इति।

अन्तरङ्गे भीतिम् अनुभवन् भरतेशः "कीदृशं साहाय्यं करणीयं मया?" इति पृष्टवान्।

"मम पुत्र्याः विवाहः निश्चितः अस्ति। मम समीपे पूर्वतनं धनं यावत् आसीत् तत् सर्वकारेण वशीकृतम्। इदानीं रिक्तहस्तः अस्मि। अतः भवता यदि सहस्रं रूप्यकाणि दीयेरन् तर्हि महान् उपकारः कृतः भवेत्। मासाभ्यन्तरे धनं प्रत्यर्पयिष्यामि अहम्" इति उक्तवान् वीरमल्लः।

'धनं दत्तं चेत् प्रत्यागच्छेत् वा न वा इति सन्देहः। न दत्तं चेत् एषः क्रोधेन मम कामपि





हानिं कुर्यात्। अतः धनदानम् एव वरम्' इति आलोच्य सहस्रं रूप्यकाणि दत्त्वा तं प्रेषितवान् भरतेशः।

वीरमल्लस्य निर्गमनस्य अनन्तरम् अल्पे एव काले भद्रकः आगत्य– "श्रीमन्!" इति एतावत् उक्त्वा सङ्कोचवशात् मौनं स्थितवान्।

"कः विषयः? वदतु तावत्" इति उक्तवान् भरतेशः।

"मम पत्नी अस्वस्था। चिकित्सार्थं सा नगरं नेतव्या। भवन्तं शरणं गतः अस्मि। कृपया शतं रूप्यकाणि ददातु। वृद्धिसहितं तत् मासाभ्यन्तरे प्रत्यर्पयिष्यामि" इति दैन्येन प्रार्थितवान् भद्रकः।

एतत् श्रुतवतः भरतेशस्य मुखभावः झटिति परिवृत्तः। वीरमल्लाय धनं दत्तं यत् तद्विषयकः तापः हृदये आसीत् एव। अतः सः कोपेन– "ये ये पृच्छन्ति तेभ्यः सर्वेभ्यः दातुं मम गृहे किं धनस्य वृक्षः वर्धितः? दशभ्यः निमेषेभ्यः पूर्वम् आगत्य वीरमल्लः पुत्रीविवाहव्याजम् उक्त्वा सहस्रं रूप्यकाणि स्वीकृत्य गतवान्। इदानीं भवान् आगत्य पीडयन् अस्ति" इति उक्तवान्।

भद्रकः तु महत् दैन्यं प्रदर्शयन्– "श्रीमन्! धनं नास्ति इति मा वदतु कृपया" इति प्रार्थितवान्।

"भद्रक! वस्तुस्थितिं वदामि। कोपः मास्तु। वीरमल्लः तु चौर्यात् वा धनं सम्पाद्य ऋणं प्रत्यर्पयितुं शक्नोति। किन्तु कर्मकरवृत्त्या जीवतः भवतः तादृशं सामर्थ्यं नास्ति खलु। अतः एतानि दश रूप्यकाणि स्वीकरोतु। एतानि प्रत्यर्पणीयानि न" इति उक्तवान् भरतेशः।

भद्रकः तत् धनम् अस्वीकृत्य मौनं ततः निर्गतवान्। समीपे एव एतत्सर्वं पश्यन् स्थितः वीरमल्लः भद्रकं पृष्टवान्– "धनं प्राप्तं वा?" इति।

"न" इति वदन् खेदेन शिरः चालितवान् भद्रकः।

ततः मासद्वयाभ्यन्तरे भरतेशस्य गृहे महत् चौर्यं जातम्। धनम् आभरणानि च चोरितानि। पञ्चविंशतिसहस्रं रूप्यकाणि नष्टानि इति खेदम् अनुभूतवान् भरतेशः।

ततः सप्ताहस्य अनन्तरं कदाचित् भद्रकः क्षेत्रे जलव्यवस्थां कुर्वन् आसीत्। तदा वीरमल्लः तस्य समीपम् आगतवान्। "भवान् एव खलु भद्रकः नाम?" इति भद्रकं पृष्टवान् च।

"आम्, अहम् एव भद्रकः। भवान् कः इति जानामि अहम्। मत्समीपे किं कार्यं भवतः?" इति गाम्भीर्येण पृष्टवान् भद्रकः।

"केभ्यश्चित् दिनेभ्यः पूर्वं भवान् भरतेशसमीपं गत्वा ऋणं सम्प्रार्थ्य अप्राप्य निराशया प्रत्यागतवान् खलु। स्वीकरोतु एतं धनग्रन्थिम्। अत्र द्विशतं रूप्यकाणि सन्ति। एतत् धनं भवतेशगृहात् एव चोरितं मया। अतः भवते एतस्य दानात् यत् पुण्यं लभ्यते तत् भरतेशम् एव प्राप्नोति" इति उक्त्वा धनस्यूतं समीपे एव स्थापयित्वा वेगेन ततः निर्गतवान्।

भद्रकः तं धनस्यूतं स्वीकृत्य भरतेशस्य गृहम् आगतवान्। प्रवृत्तं समग्रं निवेद्य भरतेशाय धनस्यूतं यच्छन् उक्तवान्– "श्रीमन्! चोरेण वीरमल्लेन उक्तं यत् अस्मिन् ग्रन्थौ द्विशतं रूप्यकाणि सन्ति इति। मया तु ग्रन्थिः न उद्घाटितः। भवान् एव उद्घाट्य गणयतु" इति।

किन्तु भरतेशः धनम् अस्वीकुर्वन्– "मां क्षाम्यतु भद्रक! वीरमल्लः चौर्येण वा धनं सम्पाद्य ऋणं प्रत्यर्पयिष्यति इति उक्तम् आसीत्। तेन अन्यत्र कुत्रचित् चौर्यं क्रियेत इति मया चिन्तितम्। किन्तु तेन मम गृहे एव चौर्यं कृतम्। उपकृतवते भवते अल्पम् ऋणं दातुम् अपि अहं सिद्धः न जातः। कठोरवचनानि अपि उक्तानि। तस्य परिणामतः एव मम गृहे चौर्यं जातं स्यात्। कृतस्य योग्यं प्रतिफलं प्राप्तं मया। एतत् धनं भवत्समीपे एव भवतु। भवता यः उपकारः कृतः तदर्थम् एतत् दीयते। मास्तु इति मा वदतु कृपया" इति उक्तवान्।

धनस्यूतं स्वीकृत्य कृतज्ञतावचनानि उक्त्वा महता सन्तोषेण स्वकीयं गृहं गतवान् भद्रकः।



# मनसः एकाग्रता

पूर्वं कस्मिंश्चित् अरण्ये ऋष्यशृङ्गः बदरीनाथश्चेति द्वौ संन्यासिनौ आस्ताम्। ऋष्यशृङ्गस्य आश्रमस्य समीपे एव बदरीनाथस्य आश्रमः। मध्यवयस्कौ तौ सदा तपसि लीनौ भवतः।

कदाचित् बदरीनाथः ऋष्यशृङ्गम् उक्तवान्– "जनानां मध्ये वासः करणीयः इति इच्छा तदा तदा मां बाधते। अतः मम ध्याने तदा तदा भङ्गः भवति" इति।

एतत् श्रुत्वा क्षणकालस्य मौनस्य अनन्तरम् ऋष्यशृङ्गः उक्तवान्– "विचित्रा इच्छा भवतः। तथापि इच्छायाः निरोधः क्षेमाय न। अतः यथा इच्छा तथा करोतु" इति।

अनन्तरदिने एव बदरीनाथः अरण्यात् निर्गत्य समीपस्थम् एकं नगरं प्राप्तवान्। नगरस्य सौन्दर्यं, विशेषाः च तस्मै नितराम् अरोचन्त। किन्तु मासाभ्यन्तरे सः नगरजीवनस्य वञ्चनाः, कलहाः, मारणानि, असत्यकथनम् इत्यादीनि दृष्ट्वा जुगुप्सितः अभवत्। अतः सः नगरं परित्यज्य अरण्यस्थं स्वकीयम् आश्रमं गतवान्।

अल्पे एव काले प्रत्यागतवन्तं बदरीनाथं दृष्ट्वा ऋष्यशृङ्गः सन्तुष्टः। बदरीनाथः नगरानुभवं विस्तरेण निवेदयन् आसीत्। ऋष्यशृङ्गः तु अशृण्वन् इव स्थितः अस्ति। एतत् दृष्ट्वा बदरीनाथः पृष्टवान्– "नगरजीवने भवान् सर्वथा अनासक्तः इति भाति। किमर्थम् एवम्? नगरजीवनवार्ताश्रवणात् मनसः एकाग्रता नश्येत् इति भीतिः वा?" इति।

तदा ऋष्यशृङ्गः मन्दहासपूर्वकम् उक्तवान्– "नगरजीवनवार्ताश्रवणात् मम न काऽपि भीतिः, किन्तु तत्र आसक्तिः नास्ति मम। नागरिकजीवनात् विरक्तिम् अप्राप्य एव भवान् तात्कालिकावेगकारणतः अत्र आगतः आसीत् इति भाति। अतः एव भवदीयं मनः तदा तदा नागरिकजीवनविषये आसक्तं भवति स्म। इदानीं तु तत् जीवनं दृष्टं भवता। ततः विरक्तः अपि। अतः इतःपरं मनसः एकाग्रतायाः प्राप्तौ न कोऽपि क्लेशः" इति।

ततः अल्पे एव काले बदरीनाथः अपि ध्यानसन्दर्भे निरन्तरम् एकाग्रतां प्राप्नुवन् परिपूर्णः संन्यासी जातः।






भगवता परराज्याक्रमणतः भारतस्य रक्षणार्थं निर्मितं प्राकृतिकं दुर्गम् इव स्थिता उन्नता हिमालयपर्वतश्रेणी। तत्र कस्यचित् पर्वतस्य उपरि स्थित्वा सत्यानन्दमुनिः परितः दृष्टिं प्रसारयन् अस्ति। अधोभागे प्रसृतस्य हिमराशेः मध्ये उदितस्य सूर्यस्य सुवर्णवर्णाः किरणाः कान्त्या प्रकाशमानाः सन्ति। पर्वतमूले काश्चन लघुनद्यः, विशालः प्रदेशश्चापि दृश्यन्ते स्म। एषः प्रदेशः दुर्गमः चेदपि रमणीयः आसीत्।

मुनिः पूर्वस्यां दिशि दृष्टिं प्रसार्य उदयन्तं सूर्यं मनसा नमस्कृत्य खाते दृष्टवान्। तस्य प्रदेशस्य रमणीयतां पश्यतः मुनेः मनसि विविधाः भावनाः। 'अहो भगवतः महिमा! रामणीया प्रकृतिः सृष्टा तेन। तरुलतादीनां वर्णवैविध्यम्। स्वेच्छया विहरतां पक्षिणां मधुरः कलरवः! निर्बाधं सञ्चरतां वन्यपशूनां रूपवैविध्यम्! एतादृशं प्रकृतिवैचित्र्यं सौन्दर्यं च दृष्ट्वा सन्तोषम् अनुभवतु इति आलोच्य भगवता मानवे अपूर्वं मस्तिष्कं निहितम्। प्राकृतिकस्य एतस्य ऐश्वर्यस्य मूल्यं जानाति मानवः। युक्तायुक्तविवेके समर्थः अपि सः। तथापि मानवः बहुत्र अविवेकेन एव व्यवहरति। प्रपञ्चस्थानां सर्वेषां स्वामी अहम् एव इति भावयति सः। परहितम् अपि चिन्तयन् मानवः यदि विवेकेन व्यवहृतवान् स्यात् तर्हि कियत् समीचीनम् अभविष्यत्!



परहितैकचिन्तकस्य नूतनस्य मानवस्य सृष्टिः कुतो वा मया न करणीया? अवश्यं करणीयं मया। मम तपःशक्तिम् उपयुज्य एतत् साधनीयम्।'

'स्वपरिसरे लोपं दृष्ट्वा अपि यः मौनं तिष्ठति सः पापभाक् भवति एव। अतः मया लोकस्य न्यूनतायाः निवारणार्थं प्रयत्नः अवश्यं करणीयः'

सुदीर्घस्य चिन्तनस्य अनन्तरं सत्यानन्दमुनिः एवं निर्णीतवान् आसीत्। सत्यानन्दमुनिना प्राकृतिकरहस्यानि बहुधा परिशीलितानि आसन्। योगशक्त्या विभिन्नाः प्रयोगाः अपि कृताः आसन्। नूतनस्य मानवस्य सृष्टौ स्वार्थभावना काऽपि न आसीत् खलु। अतः धैर्येण तथा कर्तुम् उद्युक्तः अस्ति सः। यदि एतेन भगवदिच्छायाः विरोधः स्यात् तर्हि अपि दयामयः भगवान् क्षाम्यति एव इति तस्य दृढः विश्वासः।

पर्वतशिखरात् सत्यानन्दमुनिः यदा गुहासमीपम् आगतः तदा शिष्यः उक्तवान्– "गुरुवर्य! मुहूर्तः आसन्नः अस्ति" इति।

"आम्। यज्ञः काले एव परिसमापनीयः। एषोऽहम् आगच्छामि" इति उक्तवान् सत्यानन्दमुनिः।

उभौ अपि मिलित्वा गुहां प्रविष्टवन्तौ। गुहायाः पार्श्वद्वये द्वारद्वयम् अस्ति। मध्ये होमकुण्डः आसीत्। अग्नेः प्रकाशः तत्र सर्वत्र प्रसृतः आसीत्।

सत्यानन्दमुनिः होमकुण्डस्य पार्श्वे उपविश्य– "वत्स कपिल! अग्निः निरन्तरं ज्वालासहितं यथा ज्वलेत् तथा पश्यतु। कस्मिंश्चित् अपि क्षणे अभीष्टसिद्धिः भवितुम् अर्हति" इति उक्त्वा नेत्रे निमील्य ध्यानमग्नः जातः।

क्षणकालस्य अनन्तरं नेत्रे किञ्चित् उन्मील्य मन्त्रान् जपन् विविधाः समिधः, पुष्पाणि, कुङ्कुमादीनि च आहुतिरूपेण अर्पयति स्म।

अग्निज्वालाः क्रमशः कञ्चित् निर्दिष्टम् आकारं प्राप्तवत्यः। एतत् दृष्टवतः मुनेः नेत्रे विकसिते। अनन्तरक्षणे कश्चन मानवाकारः



तत्र स्फुटः जातः। तस्य आकारस्य सर्वाणि अङ्गानि स्फुटानि जातानि। किन्तु स च आकारः मानवापेक्षया नितरां वामनः।

स च मनुष्याकारः मुनिं विनयेन नमस्कृत्य— "अहं कः?" इति पृष्टवान्।

"भवान् मनुष्यः। किन्तु भवान् न सामान्यः। यज्ञद्वारा पञ्च भूतानि मेलयित्वा भवन्तं सृष्टवान् अस्मि। अतः पञ्चानाम् अपि भूतानां शक्तिः अस्ति भवति। प्रपञ्चे प्रचलन्तः असत्यव्यवहार-वञ्चना-द्रोह-क्रौर्यादयः सर्वे ज्ञायन्ते भवता। किन्तु भवान् कदापि क्रौर्यादिषु आसक्तः न भविष्यति। इतरमानवानां व्यवहारात् भिन्नं भवति भवतः व्यवहारः। धर्मरक्षणार्थम् एव भवान् आजीवनं कार्यं करिष्यति। मानवजातेः मार्गदर्शकः भवति भवान्। बहोः कालस्य मम स्वप्नः भवद्द्वारा साकारः भविष्यति" इति उक्तवान् मुनिः सत्यानन्दः।

"भवतः अपेक्षां निश्चयेन पूरयिष्यामि। सर्वाः भाषाः ज्ञायन्ते मया। किन्तु अहम् अन्येषाम् अपेक्षया किमर्थं वामनः जातः?" इति पृष्टवान् सः नूतनः मानवः।

"भवान् न सामान्यः इति उक्तं खलु मया? असामान्या बुद्धिशक्तिः भवतः। युक्तौ शक्तौ च भवतः अपूर्वं सामर्थ्यम्। भवदीयानि सर्वाणि अङ्गानि अतीव समर्थानि। अतः अङ्गानि यावदावश्यकं तावदेव प्रवृद्धानि। मानवेषु अङ्गानि दीर्घाणि उन्नतानि वा। किन्तु न तानि तावत् समर्थानि। लोकस्य अभ्युदयार्थं कार्यं करणीयं भवता। शैघ्र्येण गमनार्थं भवतः एतत् वामनं शरीरम् आनुकूल्यं कल्पयति। भवतः नाम 'अपूर्वः' इति निर्दिशामि अहम्। नाम्ना अपूर्वः भवान् व्यवहारेण अपि अपूर्वः भविष्यति। यद्यपि भवान् इदानीं वामनः, तथापि एतत् वामनं रूपं आजीवनं भविष्यति इति न। जीवनस्य उत्तरार्धे भवता बहुधा पराक्रमाः प्रदर्श्यन्ते। क्रूरशक्तयः सम्मुखीक्रियन्ते। अन्ते किञ्चित्कालं शान्तं जीवनं यापयिष्यति भवान्। तदा भवदीयम् शरीरं सामान्यमानवाकारकं भविष्यति। किन्तु तच्च कदा इति तु दैवेन एव निर्णीयते" इति

उक्तवान् मुनिः सत्यानन्दः।

"आर्य! सर्वं ज्ञातम्। भवतः अपेक्षां निश्चयेन पूरयिष्यामि" इति विनयेन उक्तवान् अपूर्वः।

तावता तेन उदरे काचित् पीडा अनुभूता। एषा बुभुक्षापीडा इति स्वज्ञानबलात् ज्ञातवान् सः। बुभुक्षानिवारणार्थं फलादिकं किमपि लभ्येत वा इति परितः दृष्टवान् सः। सत्यानन्दमुनिः तस्य इङ्गितं जानन् शिष्यं कपिलं मन्दहासपूर्वकम् उक्तवान्– "वत्स! एतस्य खादनार्थं पूर्वं मया सज्जीकृत्य स्थापितानि फलानि आनयतु" इति।

अनन्तरं सत्यानन्दमुनेः आज्ञायाः अनुगुणं शिष्यः कपिलः कानिचन फलानि आनीय स्थापितवान्।

"अपूर्व! एतानि फलानि यः खादति तं बहूनि दिनानि यावत् बुभुक्षापिपासादयः न बाधन्ते" इति उक्तवान् मुनिः।

तानि स्वीकृत्य– "महात्मन्! धन्यवादाः। इदानीं बहिः गन्तुम् अनुज्ञा दातव्या" इति उक्तवान् अपूर्वः।

"इष्टार्थसिद्धिः भवतु। विशालं प्रपञ्चं प्रविशतु तावत्" इति उक्तवान् मुनिः।

अपूर्वः भक्त्या मुनिं नमस्कृत्य गुहातः बहिः आगत्य अग्रे गतवान्। मुनिः शिष्यश्च तम् अनुसृतवन्तौ।

सूर्यस्य बालकिरणानां स्पर्शतः रोमाञ्चं सन्तोषं च प्राप्नुवन् अपूर्वः– "अहो! महत् सुखम्! मधुरः अनुभवः!" इति उक्तवान्।

"वत्स! एतादृशी मधुरानुभूतिः भवतः





जीवने सदा भविष्यति। वस्तुतः तु एषः प्रपञ्चः मधुरानुभवदाता एव। किन्तु मानवाः स्वकृत्यैः अनिष्टं फलं प्राप्नुवन्ति कदाचित्। भवान् सदा कर्तव्यपरायणः भवतु। सत्कार्यं भवतः जीवनस्य लक्ष्यं भवतु। यशोमार्गे अग्रेसरः भवतु" इति उक्तवान् मुनिः।

तावता अपूर्वस्य भ्रुवौ वक्रे जाते। "किमिदं श्रूयते! कुतः एषः आर्तनादः? अहो तत्र अग्निज्वालाः! कथम् एवं प्रवृत्तम्! के ते सकरुणं क्रन्दनं कुर्वन्ति!" इति खेदेन उक्तवान् अपूर्वः।

"किं श्रुतम्? अस्माभिः किमपि न श्रुतम्। किमपि न दृष्टम् अपि" इति उक्तवान् शिष्यः कपिलः।

"आं वत्स! वयं यत् द्रष्टुं श्रोतुं वा न शक्नुमः तादृशम् अपि द्रष्टुं श्रोतुं च शक्नोति अपूर्वः। तस्य इन्द्रियाणां पाटवम् अपूर्वम्। तद्बलात् सः तादृशं शृणोति पश्यति च। तावदेव न, वायुवेगेन सञ्चारे अपि समर्थः सः। अग्रिमां घटनां पश्यतु तावत्" इति कपिलम् उक्तवान् मुनिः।

"तत्र किं प्रवर्तते इति पश्यामि वा?" इति सत्यानन्दमुनिं पृष्टवान् अपूर्वः।

"अवश्यं पश्यतु। देवः एव भवतः साहाय्यकः" इति उक्तवान् मुनिः।

अपरक्षणे अपूर्वः वेगेन धावितवान्। धावन् सः पाञ्चालिकारूपम् इव प्राप्नुवन्, क्षीणः भवन् कुत्रापि अदृश्यः अभवत्।

एतत्सर्वं पश्यन् स्थितः कपिलः आश्चर्येण– "कथम् एतत्? कुत्र गतः अपूर्वः? कथम् अदृश्यः अभवत् सः?" इति पृष्टवान्।

"वेगाधिक्येन गमनेन एतत् सिद्ध्यति। भगवदनुग्रहः अत्र साहाय्यकः। पामराः वयम् एतादृशं द्रष्टुं न शक्नुमः" इति उक्तवान् सत्यानन्दमुनिः।

* * * *

"अहो, औद्धत्यं भवताम्! भूस्वामिनः गृहस्य निर्माणार्थम् आगमनं निराकुर्वन्तः सन्ति भवन्तः। महान्तः कुपिताः भवन्ति चेत् कः परिणामः स्यात् इति सम्यक् ज्ञातव्यं भवद्भिः। कृतस्य फलम् अनुभवन्तु" इति कोपेन वदन्तः केचन दृढकायाः

कुटीरसदृशानि गृहाणि अग्निना ज्वालयन्तः आसन्।

"कियत्कालं निर्वेतनं कार्यं कर्तुं शक्येत? आयकराणि कार्याणि परित्यज्य वयं यथाशक्ति भूस्वामिनः गृहस्य निर्माणकार्ये सहकारं दत्तवन्तः। गृहे पत्नीपुत्रादयः सन्ति। ते उपवासकारणतः मरणं प्राप्नुवन्तः सन्ति। अतः इतः परम् अपि वयं निर्वेतनं कार्यं कर्तुं न शक्नुमः। अस्माकं कष्टम् अवगच्छन्तु कृपया। गृहाणि मा ज्वालयन्तु" इति वदन्तः आसन् केचन निर्धनाः। किन्तु तेषां कथनं, रोदनम्, आर्तनादं वा कः शृणोति?

दृप्ताः भूस्वामिनः सेवकाः अट्टहासं कुर्वन्तः गृहाणां ज्वालने मग्नाः आसन्। अवरोधकान् लीलया अपसारयन्तः ते अग्रे गच्छन्तः आसन्। जनानाम् आक्रन्दनं तेषाम् उत्साहं वर्धयति स्म।

अकस्मात् अग्निज्वालानाम् उपरि वृष्टिः इव जलबिन्दवः पतिताः। भूस्वामिनः सेवकाः आश्चर्यम् अनुभवन्तः आकाशं पश्यन्ति। आकाशे मेघाः न दृश्यन्ते। मेघानाम् अभावे वृष्टिः कथम् इति परितः दृष्टवन्तः ते।

तावता कश्चन विचित्रः ध्वनिः श्रुतः। ध्वनिम् अनुसरन्तः ते तस्यां दिशि दृष्टिं प्रसारितवन्तः। अनतिदूरे स्थितायां लघुनद्यां गजानां समूहः दृष्टः। गजाः शुण्डया जलम् उन्नीय अग्नेः उपरि पातयन्तः आसन्। एवं जलं पातयन्तः एव ते भूस्वामिसेवकान् कोपेन दृष्टवन्तः। घीङ्कुर्वन्तः तान् प्रहर्तुम् अग्रे आगतवन्तः अपि। एतत् दृष्ट्वा दिग्भ्रान्ताः ते सेवकाः ततः पलायनं कृतवन्तः।

एवं पलायनं कुर्वतः भूस्वामिनः सेवकान् दृष्ट्वा कश्चित् सन्तोषेण उच्चैः हसितवान्। उन्नतस्य गजस्य उपरि उपविश्य गजं चालयन् अग्रे आगच्छन् अस्ति सः।

'कः एषः आर्तरक्षकः विलक्षणः पुरुषः? एषः देवः, उत पिशाचः, उत वन्यजनः? अस्मान् एषः पीडयति चेत् किं करणीयम्?' इति चिन्तयन्तः जनाः किङ्कर्तव्यतामूढाः जाताः। —(अनुवर्तते)



# पण्डितस्य मार्गदर्शनम्

प्राचीने काले कन्याकुब्जदेशे पुष्यमित्रः नाम कविः आसीत्। सः नितरां दरिद्रः। कदाचित् श्रीवत्सः नाम कश्चन पण्डितः पुष्यमित्रस्य कविताः पठितवान्। तेन सन्तुष्टः सः पुष्पमित्रम् उक्तवान्– "मित्र! एताः कविताः यदि राजा शृणुयात् तर्हि भवतः दारिद्र्यम् अपगच्छेत्। अतः शीघ्रं गत्वा राजानं पश्यतु" इति।

पुष्यमित्रः अनन्तरदिने एव राजधानीं गत्वा राजानं दृष्टवान्। कविताः श्रावितवान् च। ताः श्रुत्वा सन्तुष्टः राजा पारितोषिकदानेन पुष्यमित्रं सत्कृतवान्, तम् आस्थाने उद्योगे नियोजितवान् च।

केचन मासाः अतीताः। कदाचित् पुष्यमित्रः पण्डितं श्रीवत्सं दृष्ट्वा उक्तवान्– "श्रीमन्! एषु दिनेषु मया याः कविताः लिख्यन्ते ताः पूर्वं लिखितानां कवितानाम् अपेक्षया अपि गुणेन हीनाः इति जनाः वदन्ति। ममापि एवम् एव भाति। किन्तु एवं किमर्थं भवति इति न जानामि" इति।

तदा श्रीवत्सः किञ्चित् विहस्य उक्तवान्– "पूर्वं यदा भवान् कविताः लिखन् आसीत् तदा केवलं प्रतिभा प्रेरिका आसीत्। किन्तु भवान् राजास्थाने उद्योगं प्राप्तवान्। अतः अनन्तरकाले लिखितानां कवितानां प्रेरिका राजानुग्रहप्राप्तीच्छा आसीत्। अतः चिन्तने परिवर्तनम् आनीय शुद्धेन भावेन यदि भवान् कविताः लिखेत् तर्हि ताः उत्तमाः एव भवेयुः" इति।

'श्रीवत्सेन युक्तम् एव उक्तम्' इति जानन् पुष्यमित्रः ततः निर्गतवान्। पुरस्कारप्राप्तिदृष्टिं परित्यज्य यथापूर्वं कविताः लिखितवान्। कालान्तरे सः जनप्रियः कविः जातः।





# सिंहेन सह संवादः

एतस्य पीडातः कथं मोक्षः प्राप्तव्यः इति चिन्तयन्तम् इव स्थितं वेतालं पुनरपि ग्रहीतुम् इच्छन् त्रिविक्रमः विना शब्दं वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रे अपि दिने इव कार्यं कुर्वन्तं भवन्तं दृष्ट्वा अहम् आश्चर्यम् अनुभवामि। कार्यविषये यावान् आग्रहः तावान् एव आग्रहः फलप्राप्तिविषये अपि स्यात्। केचन अन्तिमक्षणे औदासीन्यं प्राप्य फलप्राप्तितः वञ्चिताः भवन्ति। अत्र उदाहरणरूपेण एकां कथां श्रावयामि। कथायाः पूर्वार्धं भवता ज्ञातं स्यात्। किन्तु उत्तरार्धे एव वैशिष्ट्यम्। अतः समग्रां कथां श्रद्धया शृणोतु तावत्। तेन मार्गायासः अपि परिहृतः स्यात्" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं दिव्यानन्दः नाम कश्चित् योगी गुरुकुलं चालयन् आसीत्। आश्रमात् अनतिदूरे एकत्र घोरम् अरण्यम्। अन्यस्मिन् पार्श्वे उन्नतः पर्वतः नदी च।

कदाचित् त्रयः राजकुमाराः विद्याभ्यासार्थं दिव्यानन्दस्य गुरुकुलम् आगतवन्तः। तेषु एकः राज्यस्य भावी उत्तराधिकारी। अन्यौ द्वौ तस्य विमातुः पुत्रौ। त्रयाणाम् अपि बुद्धिमत्ता सामान्या। ते राजकुमाराः इत्यतः दिव्यानन्दः तान् विशेषश्रद्धया पाठयति।

'एते राजकुमाराः एव भाविशासकाः। एतेषां बुद्धिमत्ता न्यूना इति भावयित्वा पाठने औदासीन्यं प्रदर्शितं चेत् कालान्तरे देशस्य एव हानिः स्यात्। अतः एतैः शास्त्रपाण्डित्यं प्राप्येत वा न वा, सामान्याः केचन विषयाः वा प्रयत्नेन बोधनीयाः। एते कालान्तरे अत्युत्तमाः राजानः न भवेयुः चेदपि अप्रयोजकाः तु सर्वथा न भवेयुः। अतः एते कर्तव्यबुद्ध्या पाठनीयाः मया' इति आलोचितवान् दिव्यानन्दः।

गुरुणा बोध्यमाने शास्त्रे तत्त्वविचारे वा राजकुमाराणाम् आसक्तिः नास्ति। गुरुकुले तन्त्रशास्त्रसम्बन्धिनः बहवः ताडग्रन्थाः आसन्। राजकुमाराः गुरोः अनुपस्थितौ रहसि तान् ग्रन्थान् परिशील्य तत्रत्यान् मन्त्रान्, मन्त्रप्रयोगक्रमान् च जानन्ति स्म।

'अनधिकारिभिः विशिष्टाः मन्त्राः न अध्येतव्याः। तैः अध्ययनं कृतं चेत् हानिः एव अधिका' इति वदति स्म गुरुः। अतः एव मन्त्राणां विषये विशेषकुतूहलं राजकुमाराणाम्।

दिव्यानन्दस्य गुरुकुले गोविन्दः नाम कश्चित् विद्यार्थी आसीत्। सः तीक्ष्णमतिः विवेकी च। अतः एव गुरोः प्रियतमः आसीत् सः। दिव्यानन्दः तं योगविद्यां मन्त्रविद्यां च विशेषश्रद्धया पाठयति स्म। 'मम अनन्तरम् एषः एव गुरुकुलं यशस्वितया चालयितुम् अर्हः' इति भावयति स्म दिव्यानन्दः।

किन्तु गोविन्दस्य इच्छा यत् विद्याभ्यासस्य अनन्तरं कुत्रापि राजास्थाने महानगरे वा स्थित्वा उच्चोद्योगं प्राप्य सुखेन स्थातव्यम्

इति। गोविन्दस्य एषः विचारः दिव्यानन्देन न ज्ञायते इति न। 'मानसिकपक्वतायाः अभावतः सः धनसम्पादनं सुखसाधन-सम्पादनं च चिन्तयन् अस्ति। तथापि प्रयत्नेन सः सन्मार्गे आनेतुं शक्यः' इति दिव्यानन्दस्य आशयः।

अथ कदाचित् राजकुमारैः ज्ञातं यत् पिता तीव्रम् अस्वस्थः इति। एषा वार्ता केनचित् पथिकेन उक्ता आसीत्। राजधानीतः कोऽपि अधिकारी राजकुमारान् वार्तां निवेदयितुं नेतुं वा न आगतः एव।

'विद्याभ्यासे विघ्नः मास्तु इति आलोच्य अधिकारी न प्रेषितः स्यात्। तथापि कर्तव्यबुद्ध्या अस्माभिः गन्तव्यम् एव' इति निश्चितवन्तः राजकुमाराः।

ते गुरुं दिव्यानन्दं राजधानीगमनविषयं निवेदितवन्तः। तदा दिव्यानन्दः उक्तवान्– "गच्छन्तु भवन्तः। अहम् एव भवतां प्रेषणं चिन्तयन् आसम्। यावत् बोधनीयं तावत् बोधितं मया। अतः भवतां विद्याभ्यासः समाप्तः अस्ति। भवतां नयनार्थं कोऽपि अधिकारी किमर्थं राजधानीतः न आगतः इति तु न ज्ञायते। अतः भवन्तः एवं कुर्वन्तु। गोविन्दम् अपि नयन्तु। सः तीक्ष्णमतिः विवेकी च। मार्गे अपायः यदि उपस्थितः भवेत् तर्हि एषः झटिति परिहारोपायं सूचयेत्" इति।

तदा ज्येष्ठः राजकुमारः महान्तं सन्तोषं



प्रकटयन्– "गुरुवर्य! भवता यथा उच्यते तथैव करिष्यामः। हितचिन्तकस्य भवतः वचनस्य उल्लङ्घनं न कुर्मः वयम्" इति उक्तवान्।

"मया अन्यदपि किञ्चित् निवेदनीयम् अस्ति। भवान् भावी राजा। यदा भवान् सिंहासनारोहणं करिष्यति तदा गोविन्दं मन्त्रिणं करोतु। तदर्थम् अर्हः सः। एतेन देशस्य हितं सेत्स्यति" इति सूचितवान् दिव्यानन्दः।

"गुरुवर्य! भवतः वचनं शिरसा वहामि अहम्। युक्तायुक्ततां विचार्य भवान् वदति इत्यतः भवतः वचनं शिरोधार्यं मम। अहं यदा राजा भविष्यामि तदा गोविन्दम् अवश्यं



मन्त्रिणं करिष्यामि। सः मम मार्गदर्शकः अपि भविष्यति। सः महाधनिकेषु अन्यतमः यथा स्यात् तथा व्यवस्थाम् अपि करिष्यामि" इति विनयेन उक्तवान् ज्येष्ठः राजकुमारः।

अनन्तरं दिव्यानन्दः गोविन्दम् आहूय एकान्ते सर्वं निवेद्य उक्तवान्– "आश्रितानां रक्षणे भवान् समर्थः इति अहं जानामि। राजकुमाराः तीक्ष्णमतयः न स्युः चेदपि साधुस्वभावाः। अतः योग्येन मार्गदर्शनेन ते अग्रे नेतव्याः। लोके सर्वे राजानः शासनसमर्थाः, विवेकिनः, दक्षाः च भवन्ति इति न। प्रायः मार्गदर्शकस्य मन्त्रिणः सामर्थ्यस्य अनुगुणं कश्चन देशः उन्नतिम् अधोगतिं वा प्राप्स्यति। अतः भावी मन्त्री भवान् विवेकेन व्यवहरन् देशस्य उन्नतिं साधयिष्यति इति अहं भावयामि। राजकुमाराः भवता काले काले बोधनीयाः, अभ्युदयेन योजनीयाः, कदाचित् निग्रहणीयाः अपि। सदापि देशहितं भवतः लक्ष्यं स्यात्" इति।

गुरोः वास्तविकम् इङ्गितं जानन् गोविन्दः उक्तवान्– "श्रीमन्! विद्याभ्यासस्य अनन्तरम् अपि गुरुकुले भवतः सन्निधौ एव स्थातव्यम् इति मम इच्छा" इति।

तदा दिव्यानन्दः मन्दहासपूर्वकम् उक्तवान्– "वत्स! सुखकामना कीर्तिकामना च भवतः अस्ति एव। तारुण्ये एतत् सहजम् अपि। अतः भवान् मन्त्रिस्थानम् अलङ्करोतु। किन्तु न्याय्येन मार्गेण एव सदापि व्यवहरतु। एतत् न सुलभम्। यदि कदाचित् मानसिक-पक्वताकारणतः उद्योगे विरक्तिः जायेत तर्हि अत्र आगच्छतु" इति।

अनन्तरदिने राजकुमाराः गोविन्देन सह राजधानीं प्रति प्रस्थितवन्तः। मध्याह्नसमये ते कस्याश्चित् नद्याः तीरं प्राप्तवन्तः। ते तत्र पाथेयं खादित्वा जलं पीत्वा विश्रान्त्यर्थम् उपविष्टवन्तः।

तत्समये कनिष्ठः राजकुमारः अनतिदूरे पतितानि अस्थीनि दृष्टवान्। सः उत्साहेन उत्थाय– "एतानि कस्यचित् सिंहस्य अस्थीनि। एतानि योजयित्वा अस्थिपञ्जरं निर्माय एतस्य शरीररूपं सज्जीकर्तुं शक्नोमि

अहम्'' इति।

''तथा कृतं चेत् शरीरे मज्जा-रक्त-मांसादीनि योजयिष्यामि अहम्। यतः तादृशं कौशलं गुरुकुले सम्पादितं मया'' इति उक्तवान् द्वितीयः राजकुमारः।

''तादृशे शरीरे प्राणान् आवाहयितुम् अहं शक्नोमि'' इति उक्तवान् ज्येष्ठः राजकुमारः।

राजकुमाराणां वचनं श्रुत्वा गोविन्दः उक्तवान्– ''मित्राणि! त्वरा मास्तु। भवद्भिः उज्जीव्यमानः प्राणी सिंहः। उज्जीवितः सः भवतः एव खादेत्। 'सहसा विदधीत न क्रियाम्' इति वचनं श्रुतं खलु भवद्भिः?'' इति।

''अस्माभिः उज्जीवितः सिंहः अस्मान् न खादेत्। यदि खादितुम् आगच्छेत् तर्हि वयम् आत्मनः रक्षणे समर्थाः एव। यतः वयं क्षत्रियाः। भीरुः भवान् भीत्या अस्मान् प्रयत्नात् निवारयन् अस्ति। वयं सिंहम् उज्जीव्य तदुपरि उपविश्य राजधानीं गमिष्यामः। एवम् आगतान् अस्मान् दृष्ट्वा जनाः आश्चर्येण गौरवेण च पश्यन्ति। अस्माकं गौरवं वर्धिष्यते। सिंहस्य दर्शने भवतः भीतिः अस्ति चेत् भवान् वृक्षम् आरुह्य तिष्ठतु, ततः एव सर्वं पश्यतु च'' इति उक्तवन्तः राजकुमाराः।

''एतादृशं साहसकार्यं मास्तु'' इति बहुधा बोधितवान् गोविन्दः। किन्तु राजकुमाराः तत् तिरस्कृतवन्तः। अन्ते अनन्योपायः गोविन्दः वृक्षम् आरुह्य उपविष्टवान्।



कनिष्ठः राजकुमारः अस्थीनि योजयित्वा सिंहस्य आकारं कल्पितवान्। द्वितीयः मज्जा-मांस-रक्तादिकं तत्र योजितवान्। ज्येष्ठः प्राणावाहनं कृतवान्। अनन्तरक्षणे सिंहः केसरान् कम्पयन् उत्थाय उच्चैः गर्जनम् अकरोत्। सिंहगर्जनं श्रुत्वा राजकुमाराः किङ्कर्तव्यतामूढाः जाताः। तेषां हस्तौ पादौ च कम्पेते। सिंहः तेषां खादनार्थम् अग्रे आगच्छत्।

एतत्सर्वं निरीक्षमाणः गोविन्दः झटिति स्तम्भनमन्त्रस्य उच्चारणं कुर्वन्– ''अये सिंहराज! तिष्ठतु तावत्'' इति उच्चस्वरेण अवदत्।



मम। जन्मान्तरसम्बन्धिनी बुभुक्षा एषा। दवाग्नि: इव मां बाधते" इति।

एवं युक्तायुक्तताविषये, धर्माधर्मविषये, जन्मान्तरविषये, पापपुण्यविषये च सिंह-गोविन्दयोः चर्चा यदा प्रचलति स्म तदा राजकुमाराः ततः मौनं निर्गतवन्तः।

अन्ते सिंहः अवदत्– "अलं चर्चया! नितरां बुभुक्षितः अहं पापपुण्यादिकं न गणयामि। कथञ्चित् मया प्राणाः रक्षणीयाः। यदि एते राजकुमाराः मह्यं सिंहेतरजन्म दत्तवन्तः स्युः तर्हि एषः क्लेशः उद्भूतः न अभविष्यत्। बुभुक्षानिवारणपूर्वकं प्राणरक्षणार्थं मया एते एव खाद्यन्ते इदानीम्" इति।

"बुभुक्षा निवारणीया खलु? तर्हि भवान् माम् एव खादतु। अहम् अपि समीपे एव अस्मि" इति वदन् गोविन्दः वृक्षात् अधः आगन्तुम् उद्युक्तः।

"तिष्ठतु तावत्। मम एकः प्रश्नः। एतस्मिन् लोके जीवतः जीविसामान्यस्य जीवनस्य लक्ष्यं किं भवेत्?" इति अपृच्छत् सिंहः।

क्षणकालं विचिन्त्य उक्तवान् गोविन्दः– "अज्ञानं विच्छिद्य, सारासारविवेकं प्राप्य ज्ञानज्योतिषः दर्शनं प्राप्तव्यम्। एतत् एव जीवनस्य लक्ष्यम्" इति।

"राजकुमाराः जीवदातारः इति बोधयन् भवान् मम अज्ञानं दूरीकृतवान्। जीवदातॄन्

गोविन्दः पशुपक्षिणां भाषां सम्यक् जानाति स्म। पशुपक्षि-वशीकरणम् अपि जानाति स्म सः। सा च विद्या इदानीम् उपयोगाय अभवत्।

गोविन्दस्य वचनं श्रुत्वा सिंहः तं तीक्ष्णदृष्ट्या अपश्यत्। तदा गोविन्दः– "मृगराज! युक्तायुक्तताम् अविचार्य व्यवहरति खलु भवान्! प्राणदातॄणाम् एव मारणं किम् उचितम्?" इति अपृच्छत्।

तदा सिंहः शान्तस्वरेण अवदत्– "एते मम प्राणदातारः वा? अहं तु एतत् न जानामि स्म। एते प्राणदानेन माम् उपकृतवन्तः स्युः चेदपि बुभुक्षानिवारणार्थम् उपायम् अकल्पयन्तः दोषं कृतवन्तः। महती बुभुक्षा

राजकुमारान् यथा अहं खादितुं न शक्नोमि तथैव ज्ञानदातारं गुरुं भवन्तम् अपि खादितुं न शक्नोमि। तर्हि इदानीं मया किं करणीयम्? प्राणरक्षणार्थं कः उपायः?" इति अपृच्छत् सिंहः।

"राजकुमाराणां रक्षकः अहम्। अहं स्वयं मम शरीरम् अर्पयन् अस्मि। अतः इदानीं मां खादतु। अनन्तरकाले मृगयया आहारं सम्पादयतु" इति उक्तवान् गोविन्दः।

तावता धनुर्धारिभ्याम् आखेटकाभ्यां सह राजकुमाराः तत्र आगताः। गोविन्देन उच्चध्वनिना निवार्यमाणाः अपि ते बाणप्रयोगेण सिंहं मारितवन्तः। सिंहः अधः पतितः, प्राणान् अत्यजत् च।



सिंहस्य मरणं दृष्ट्वा राजकुमाराः नितरां सन्तुष्टाः। ज्येष्ठः राजकुमारः गोविन्दं साष्टाङ्गं नमस्कृत्य– "भवता नितराम् उपकृताः वयम्। अपाये अपि भवतः बुद्धिः हता न भवति। आश्रितरक्षणे समर्थः भवान्। अतः एव गुरुणा भवान् अस्माभिः सह प्रेषितः" इति कृतज्ञतापूर्वकम् उक्तवान्।

"मया महत्कार्यं किमपि न कृतम्। गुरोः आदेशस्य अनुसारं कर्तव्यं कृतं, तावदेव" इति उक्तवान् गोविन्दः।

"एतत् तु भवदीयं विनयवचनम्। त्रयाणां राजकुमाराणां रक्षणं सामान्यं कार्यं न। गुरुणा यथा सूचितं तदनुगुणं, यदा अहं राजा भविष्यामि तदा भवन्तं मन्त्रिस्थाने नियोजयिष्यामि। पितरम् उक्त्वा इदानीम् अमूल्यानि उपायनानि दापयिष्यामि। भवन्तं धनिकेषु धनिकं करिष्यामि" इति उक्तवान् ज्येष्ठः राजकुमारः।

गोविन्दः क्षणकालस्य मौनस्य अनन्तरं– "भवद्भिः मन्त्रिस्थानं दीयेत, महत् ऐश्वर्यम् अपि दीयेत। किन्तु तेन मम दारिद्र्यं तु न अपगच्छति। अतः अहं तादृशं किमपि न इच्छामि। अन्यच्च आश्रितानां रक्षणे असमर्थः अस्मि। अतः भवन्तः राजधानीं गच्छन्तु। एतौ धनुर्धारिणौ भवतां रक्षणं कुरुतः। अहं तु गुरुकुलम् एव गमिष्यामि" इति उक्त्वा राजकुमाराणां प्रत्युत्तरं किमपि अनिच्छन् ततः निर्गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! विचित्रः व्यवहारः खलु गोविन्दस्य? कीर्तिः धनं च तेन अभिलषितम् आसीत्। मन्त्रिपदवी यदि अङ्गीक्रियेत तर्हि तदुभयम् अवश्यं प्राप्येत। किन्तु गोविन्दः किमर्थं मन्त्रिपदवीं सत्कारं च निराकृतवान्? धनप्राप्तेः अनन्तरम् अपि दारिद्र्यं तु न अपगच्छति इत्यस्य वचनस्य आशयः कः? आश्रितानां रक्षणे अहम् असमर्थः इति सः किमर्थम् उक्तवान्? गोविन्दः विवेकभ्रष्टः इति वदामः चेत् कः दोषः? एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् केनापि कारणेन न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "महत्या बुभुक्षया अपि पीड्यमानं सिंहं मधुरैः वचनैः वशीकृत्य गोविन्दः राजकुमाराणां प्राणान् रक्षितवान्। किन्तु विवेकेन व्यवहरन्तं सिंहं रक्षितुं न शक्तवान् सः। अतः एव सः उक्तवान्– अहम् आश्रितरक्षणे असमर्थः इति। यदा प्रसङ्गवशात् सिंहेन पृष्टं– जीवनस्य लक्ष्यं किमिति, तदा उत्तरं कथयन् गोविन्दः स्वजीवनस्य लक्ष्यविषये अपि चिन्तितवान्। 'मन्त्रिपदवी अङ्गीकृता चेत्, सत्कारः अङ्गीकृतः चेत्, अहं तृष्णागर्ते पतिष्यामि। ततः उत्थानं क्लेशाय' इति स्मृतवान् सः। 'स तु भवति दरिद्रः यस्य तृष्णा विशाला' इति वचनं स्मृतं तेन। अतः सः उक्तवान्– ऐश्वर्यं प्राप्तं चेदपि दारिद्र्यं न अपगच्छति इति। प्रबलं मनोबलम् अस्ति चेत् कश्चित् उच्चोद्योगे तिष्ठन् अपि जनकमहाराजः इव आध्यात्मिकमार्गेण एव जीवितुम् अर्हति। किन्तु गोविन्दस्य तादृशं प्रबलं मनोबलं न आसीत्। अतः सः मन्त्रिपदवीस्वीकारं परित्यज्य गुरुकुलं प्रतिगतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# महात्मभिः दृष्टं भारतम्

## भिन्नत्वे सति एकत्वम्

अस्मद्देशीयेषु राजकीयनेतृषु अन्यतमः डा. राजेन्द्रप्रसादः १८८४ तमे वर्षे बिहारराज्ये जन्म प्राप्तवान्। विद्याभ्यासानन्तरं तेन न्यायवादिवृत्तिः आश्रिता। तया वृत्त्या तेन प्रभूतं धनं महती कीर्तिश्च प्राप्यमाणा आसीत्। किन्तु देशप्रेम्णा प्रेरितः सः तां वृत्तिं परित्यज्य स्वातन्त्र्यसङ्ग्रामे भागं गृहीतवान्। १९५० तमे वर्षे यदा भारतं गणतन्त्रयुक्तं जातं तदा राजेन्द्रप्रसादवर्यः सर्वप्रथमराष्ट्रपतित्वेन निर्वाचितः अभवत्। ततः १९५२ तमे वर्षे, १९५७ तमे वर्षे चापि सः एव पुनरपि राष्ट्रपतित्वेन निर्वाचितः। १९६२ तमे वर्षे सः स्वर्गस्थः जातः।

१९५६ तमे वर्षे अगस्त्मासे १६ दिनाङ्के मधुरैनगरे प्रवृत्तायां सभायां तेन एवम् उक्तम् आसीत्– "३६ कोटिमितया जनसङ्ख्यया युक्तेन भारतेन विशिष्टं दायित्वं निर्वोढव्यम् अस्ति। एतादृशे सन्दर्भे यदि वयं विघटिताः स्याम, भारतं लघुषु स्वतन्त्रराज्येषु यदि विभक्तं भवेत् तर्हि कीदृशी गतिः स्यात्? एतत् चिन्तनीयम् अस्माभिः। 'सङ्घे शक्तिः कलौ युगे' इति वचनं स्मर्तव्यम्। अतः षट्त्रिंशत्कोटिभारतीयाः अपि ऐकमत्येन तिष्ठेयुः। ऐकमत्यम् इत्यस्य अर्थः वेशादिषु एकरूपता इति न। वेश-भाषादिभिन्नत्वे सत्यपि मानसिकम् एकत्वं स्यात् अस्माकम्।

## भवन्तः जानन्ति वा?

१. अमेरिका-रशिया-जपान्-ब्रिटन्-भारतदेशानां संसदां नामानि कानि?
२. प्रपञ्चे अतिविशालः देशः कः?
३. स च देशः युरोपखण्डे अस्ति उत एशियाखण्डे?
४. प्रपञ्चस्तरे आकारेण द्वितीयस्थानीयः देशः कः?
५. आकारेण तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तमस्थानीयाः देशाः के?

(उत्तराणि ३६तमे पृष्ठे)

# गणपतिः



आदिपूज्यो गणाधिपः इति हि प्रसिद्धिः लोके। विघ्नविनाशार्थं निर्विघ्नपरिसमाप्त्यर्थं च सर्वेषु कार्येषु गणपतेः पूजा क्रियते। विघ्नेश्वरः, विनायकः, लम्बोदरः, गजाननः इत्यादीनि बहूनि नामानि गणपतेः।

अधिपः यथा आदिशति तथा व्यवहरन्ति अधीनाः। प्रवर्तने, निवर्तने, निग्रहणे च समर्थः भवति अधिपः। अतः विघ्ननिवारकः, गणपतिः विघ्नराजः जातः। गणानाम् आधिपत्यम् अस्ति एतस्य इति सूचयति गणपतिशब्दः।

जगन्माता पार्वती एतं सृष्टवती। अतः एषः शिवपार्वत्योः पुत्रः। गजस्य

आननम् एतस्य। एतत्सम्बन्धे बहुविधाः कथाः श्रूयन्ते। शिवः अविवेकेन एतस्य शिरः छिन्नवान्, अन्ते गजस्य मुखं योजितवान् इति एका कथा। अनिच्छता शनिदेवेन एषः दृष्टः यत् ततः शिरः छिन्नं, तदा शिवः गजस्य शिरः योजितवान् इति अपरा कथा। स्यात् नाम कथासु विप्रतिपत्तिः, किन्तु बहोः कालतः गणपतेः विचित्रं रूपं भक्तान् तोषयत् अस्ति इति तु सत्यम् एव।

गणपतिः सिद्धिं (विजयं) बुद्धिं(विवेकं) च ददाति। अतः सिद्धिबुद्धी एतस्य पत्न्यौ इति विश्वासः दृश्यते कुत्रचित्।

# र स वा र्ताः





## लघुतमा दूरवाणी

जपानदेशे एषु दिनेषु लघुतमा दूरवाणी निर्मिता अस्ति। एतस्याः भारः १० औन्स् केवलम्! एषा आकारेण लघुः, किन्तु ध्वनिश्रावणे न दुर्बला। अन्यासां दूरवाणीनाम् अपेक्षया अपि उत्तमरीत्या एषा ध्वनिं श्रावयति।

## श्वेतव्याघ्राः दृश्यन्ते

एते व्याघ्राः दिने अपि श्वेतया उज्ज्वलया कान्त्या विराजन्ते, यतः एते जन्मना श्वेतवर्णीयाः। ओडिस्साराज्ये सुप्रसिद्धे 'नन्दनकानन'प्रदेशे एते विरललभ्याः श्वेतव्याघ्राः द्रष्टुं शक्याः। निर्दिष्टे स्थले उपविश्य, यानेन सञ्चरद्भिः वा एते व्याघ्राः द्रष्टुं शक्याः तत्र।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. 'इतिहासपितामहः' इति ख्यातः कः? स च बिरुदः तस्मै केन दत्तः?

२. आङ्ग्लभाषया रचितः स च ग्रन्थः कः, यश्च ज्येष्ठानां विनोदार्थं रचितः आसीत्, किन्तु सः श्रेष्ठबालसाहित्यरूपेण ख्यातः अभवत्?

३. भारतीयसंविधानेन अङ्गीकृताः भाषाः कति?

४. ताश्च भाषाः काः?

५. अत्यधिकजनसङ्ख्याकैः भाष्यमाणा भारतीयभाषा का? तदनन्तरस्थानीयाः चतस्रः भाषाः काः?

## उत्तराणि

### सामान्यज्ञानम्

१. कांग्रेस्, सुप्रीम् सोवियत्, डैयेट्, हौस् आफ् कामन्स् हौस् आफ् लार्ड्स् च, लोकसभा राज्यसभा च इति।

२. सोवियत्रशियादेशः।

३. युरोपखण्डे एशियाखण्डे चापि एषः देशः प्रसृतः अस्ति।

४. केनडा। (उत्तर-अमेरिकाप्रदेशे स्थितः।)

५. चीना, अमेरिका, ब्रेजिल्, आस्ट्रेलिया, भारतं च।

### साहित्यज्ञानम्

१. क्रि.पू. ५ शतके स्थितः ग्रीकदेशीयः हेरोडोटस्। क्रि.पु. प्रथमे शतके स्थितः रोमन् तत्त्ववेत्ता सिसिरो तं तथा वर्णितवान् आसीत्।

२. जोनाथन् स्टिफट्वर्येण रचितः 'गलिवर्स् ट्राबल्स्' ग्रन्थः।

३. पञ्चदश।

४. ताश्च– अस्सामी, बङ्गाली, गुजराती, हिन्दी, कन्नड, काश्मीरी, मलयालम्, मराठी, ओडिया, पञ्जाबी, संस्कृतं, तमिळ्, तेलुगु, उर्दू, सिन्धी चेति।

५. हिन्दी। तेलुगु-बङ्गाली-मराठी-तमिळ्भाषाः क्रमशः उत्तरोत्तरस्थानीयाः।



प्रपञ्चपुराणगाथावली – ३

# साहसी बेल्लेरोफनः

अर्गोसुदेशस्य राजा प्रोयिटसः। कदाचित् बेल्लेरोफनः नाम सुन्दरः राजकुमारः अतिथित्वेन तस्य समीपम् आगतः। तस्य सौन्दर्यं बुद्धिमत्तां च दृष्टवति प्रोयिटसे असूया उत्पन्ना। ईर्ष्यया प्रेरितः सः चिन्तितवान् यत् केनापि उपायेन बेल्लेरोफनः हन्तव्यः इति।

प्रोयिटसः कदाचित् राजकुमारं बेल्लेरोफनम् उक्तवान्– "मित्र! भवान् अश्वचालने निपुणः इति श्रुतं मया। लिसियाराजाय मम मातुलाय जोबेटसाय एका वार्ता त्वरया प्रेषणीया अस्ति। किम् एतत् कार्यं भवान् कर्तुं शक्नोति?" इति। बेल्लेरोफनः एतत् अङ्गीकृतवान्। पत्रं स्वीकृत्य लिसियां प्रति प्रस्थितवान् च।





तस्मिन् पत्रे लिखितम् आसीत् यत् एतत् पत्रं यः आनयति सः युवकः केनापि उपायेन मारणीयः इति। भागिनेयस्य एतत् पत्रं पठित्वा जोबेटसः उपायचिन्तने मग्नः जातः।



ततः अनतिदूरे पर्वते चिमायिरः नाम घोरः राक्षसः निवसति स्म। राजा जोबेटसः बेल्लेरोफनं निवेदितवान्– "राक्षसात् चिमायिरात् अस्माकं प्रजाः त्रस्ताः सन्ति। यदि भवान् तस्य हनने साहाय्यं कुर्यात् तर्हि महती कृपा प्रदर्शिता भवेत्" इति। बेल्लेरोफनः झटिति एतत् अङ्गीकृत्य राक्षसनिवासं प्रति वेगेन प्रस्थितवान्।

चिमायिरः कश्चन विचित्रः राक्षसः। तस्य शिरसः पार्श्वे अन्यत् शिरोद्वयम् आसीत्। एकं सिंहशिरः, अपरम् अजशिरः। तस्य मुखात् सदा अग्निः निस्सरति स्म। अतः यः तस्य अभिमुखम् आगच्छति सः अग्निना दग्धः भवति स्म।





एषः राक्षसः केन क्रमेण सम्मुखीकरणीयः इति न जानाति बेल्लेरोफनः। अतः सः इष्टदेवतायाः ध्याने लीनः जातः। बेल्लेरोफनस्य भक्त्या सन्तुष्टा इष्टदेवी मिनरवा प्रत्यक्षा अभवत्। सा देवी बेल्लेरोफनाय पक्षयुक्तम् उड्डयनसमर्थं फेगाससनामकम् अश्वं दत्तवती।

वेगेन गन्तुं समर्थः अश्वः फेगाससः उड्डयनं कर्तुम् अपि अर्हति स्म खलु? अतः एतादृशम् अश्वं प्राप्तवतः बेल्लेरोफनस्य उत्साहः चतुर्गुणितं प्रवृद्धः। सः राक्षसस्य सम्मुखं गतवान्।





अनन्तरं बेल्लेरोफनस्य राक्षसस्य च मध्ये घोरं युद्धं प्रवृत्तम्। उड्डयनसमर्थस्य अश्वस्य साहाय्येन बेल्लेरोफनः अनायासेन आत्मनः रक्षणं कर्तुं शक्नोति स्म। आत्मानं रक्षन् सः पुनः पुनः राक्षसस्य उपरि आक्रमणं करोति स्म।

अन्ते राक्षसेन चिमायिरेण पराजयः अङ्गीकृतः। विजयी युवकः बेल्लेरोफनः राज्ञः जोबेटसस्य समीपम् आगतवान्। जोबेटसः महत्या प्रीत्या बेल्लेरोफनं स्वागतीकृतवान्। अनन्तरं सः बेल्लेरोफनं बहुषु अपायकारिषु कार्येषु नियोजितवान्। किन्तु सर्वत्र अपि बेल्लेरोफनस्य विजयः एव!





अत्रान्तरे जोबेटसस्य कनिष्ठा पुत्री बेल्लेरोफने अनुरक्ता जाता। एषा वार्ता जोबेटसेन अपि श्रुता। यद्यपि जोबेटसः प्रोयिटसस्य आदेशस्य अनुगुणं बेल्लेरोफनम् अपायकारिषु कार्येषु प्रेरयन् आसीत्, तथापि सः बेल्लेरोफनस्य साहसप्रवृत्तिं दृष्ट्वा नितरां सन्तुष्टः आसीत्।

ततः अल्पे एव काले जोबेटसः बेल्लेरोफनाय पुत्रीं दत्त्वा विवाहं निर्वर्तितवान्। एतां वार्तां श्रुतवतः प्रोयिटसस्य महान् कोपः। यं मारयितुं सः इष्टवान् स च इदानीं राजपुत्रीं परिणीतवान्! किन्तु कोपे सत्यपि किमपि कर्तुं न शक्नोति प्रोयिटसः।





राज्ञः जोबेटसस्य पुंसन्तानः न आसीत्। अतः गच्छता कालेन बेल्लेरोफनः एव लिसियाराज्यस्य अधिपतिः जातः। सुदीर्घकालं यावत् सः योग्येन क्रमेण राज्यपरिपालनं कृतवान्।



# उपहासप्रवृत्तिः

चन्द्रपुरस्य ग्रामाधिकारी शरच्चन्द्रः महादुष्टः। सरलहृदयानां सज्जनानां पीडने तस्य महती आसक्तिः।

तस्मिन् ग्रामे वरदः नाम कृषिकः आसीत्। सरलं तं कदाचित् उक्तवान् शरच्चन्द्रः– "अये वरद, प्रतिदिनं भवान् मम गृहे कार्यं करोति चेत् अचिरात् एव भगवान् भवन्तम् आढ्यं करिष्यति" इति।

एतत् अङ्गीकुर्वन् वरदः शरच्चन्द्रस्य गृहस्य कार्याणि श्रद्धया कर्तुम् आरब्धवान्। प्रतिफलरूपेण वेतनं तु न प्राप्यते तेन।

वैद्यः शिवराजः कापट्यं किमपि न जानाति। सेवाभावनया जनानां चिकित्सां करोति सः। निर्धनेभ्यः निश्शुल्कम् औषधं यच्छति च। वैद्यस्य एतादृशीं सेवां दृष्ट्वा सन्तोषः खलु प्राप्तव्यः? किन्तु शरच्चन्द्रः वैद्यस्य उपहासं करोति– "एषः वैद्यः गते जन्मनि महान् पापी आसीत्। बहूनाम् ऋणं प्रत्यर्पणीयम् आसीत् तेन। अतः एतस्मिन् जन्मनि सेवया ऋणात् मुक्तिं प्राप्नुवन् अस्ति" इति।

विद्यालये पाठ्यन्तम् अध्यापकं पृच्छति सः– "मरणानन्तरं का गतिः इति जानाति वा भवान्?" इति।

किम् उत्तरं वक्तव्यम् इति अजानन् अध्यापकः यदा इतस्ततः पश्यति तदा शरच्चन्द्रः पुनः वदति– "मरणस्य अनन्तरं पिशाचजन्म प्राप्यते। अनन्तरं बालानां पाठने उद्युक्ताः भवन्ति ते। मम वचने विश्वासः नास्ति चेत् बालान् पृच्छतु" इति।

एतत् श्रुत्वा बालाः उच्चैः हसन्ति। एवं शरच्चन्द्रः सर्वेषाम् उपहासं करोति। तथापि जनाः तत् सहमानाः मौनं तिष्ठन्ति। 'ग्रामाधिकारिणः धनिकस्य एतस्य विरोधः



क्लेशाय भवेत्' इति चिन्तयन्ति स्म ते।

तस्मिन् ग्रामे राममन्दिरम् अस्ति। राममन्दिरस्य अर्चकः गणेशशर्मा। कदाचित् तस्य बन्धुः गोपालः तदीयं गृहम् आगतवान्। तौ गृहस्य पुरतः उपविश्य वार्तालापे मग्नौ आस्ताम्। वार्तालापमध्ये तौ सन्तोषेण हसतः। गणेश-गोपालयोः हासः तेन मार्गेण गच्छता शरच्चन्द्रेण दृष्टः।

सः गणेशम् उक्तवान्– "गणेशवर्य! केन कष्टेन पीडितः भवान् एवं दुःखी अस्ति? कष्टं मां निवेदयतु। अहं साहाय्यं करिष्यामि" इति।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् शरच्चन्द्रं पृष्टवान् गोपालः– "गणेशवर्यः तु हसन् अस्ति। भवान् वदति यत् सः दुःखी इति। किम् एतत्? कः भवान्?" इति।

"अहो, विस्मृतम् आसीत् मया। गणेशवर्यः हसति चेदपि रोदिति इव भासते। इदानीम् एतत् स्मृतं मया" इति वदन् ततः निर्गतवान् शरच्चन्द्रः।

शरच्चन्द्रस्य निर्गमनस्य अनन्तरं गोपालः गणेशवर्यं पृष्टवान्– "कोऽयं मूर्खः? वेषेण तु आढ्यः इव भाति। किन्तु शिष्टाचारम् अपि न जानाति! सः असम्बद्धं कथयन् अस्ति चेदपि भवान् किमर्थं मौनम् उपविष्टः आसीत्?" इति।

"प्रक्षालनात् हि पङ्कस्य दूरात् अस्पर्शनं वरम्। एषः आढ्यः, ग्रामाधिकारी चापि। अतः एतस्य विरोधं कोऽपि न इच्छति। तस्य वचनम् उपेक्षया पश्यामः वयम्" इति उक्तवान् गणेशशर्मा।

"एवं चेत् कथम्? सरलान् सामान्यान् सज्जनान् च एषः एवम् एव पीडयन् तिष्ठेत्। योग्येन क्रमेण बोधनीयः एषः" इति उक्तवान् गोपालः।

तस्मिन् ग्रामे कश्चन विचित्रः सम्प्रदायः आसीत्। पर्वदिने ग्रामीणाः सर्वे एकत्र सम्मिलिताः सन्तः मादकं पानीयं पिबन्ति स्म। एवं कृतं चेत् आवर्षं सन्तोषः तिष्ठति इति तेषां भावना आसीत्।

चतुर्णां दिनानाम् अनन्तरं तत् पर्व आगतम्। ग्रामीणाः सर्वे सम्मिलिताः सन्तः

तेषां पुरतः स्थित्वा गोपालः– "मया मदवशात् शरच्चन्द्रः दुष्टः कृपणश्च इति उक्तम्। अन्योपहासः एव एतस्य प्रवृत्तिः इति उक्तम्। सः बरदद्वारा निर्वेतनं स्वगृहकार्याणि कारयन् अस्ति इति उक्तम्। सज्जनं वैद्यं शिवराजं पापिनम् उक्तवान् इति उक्तम्। अध्यापकं पिशाचं वदन् पानीयं पातुम् उद्युक्ताः जाताः। तत्र ग्रामाधिकारी अपि उपस्थितः आसीत्। गणेशशर्मणा सह गतः गोपालः ग्रामाधिकारिणः पार्श्वे उपविश्य पानीयसेवनम् अभिनयन् आसीत्।

अनन्तरदिने गोपालः शरच्चन्द्रस्य गृहं गत्वा उक्तवान्– "श्रीमन्! ह्यः अहं मदजनकस्य पानीयस्य प्रभावतः भवद्विषये किमपि उक्तवान्। अतः अहं ह्यः तत्र उपस्थितानां सर्वेषां पुरतः क्षमां प्रार्थयितुम् इच्छामि। कृपया तान् सर्वान् मेलयतु" इति।

'एतेन तु महान् सन्तोषः प्राप्येत' इति भावयन् शरच्चन्द्रः ग्रामीणान् मेलितवान्। उपहसितवान् इति उक्तम्। एवं बहूनाम् अकार्याणां कर्ता शरच्चन्द्रः इति उक्तम्। अतः शरच्चन्द्रवर्य! भवतः निन्दनं मया यत् कृतं तदर्थं क्षमां प्रार्थये" इति उक्तवान्।

तदा कश्चित् अग्रे आगत्य उक्तवान्– "वृथा किमर्थं खेदः भवतः? ह्यः वयं सर्वे आस्म खलु? भवता एतादृशं वचनम् एकम् अपि न उक्तम्। अहम् उक्तवान् स्याम् इति भ्रमः भवतः। अतः क्षमायाचनस्य आवश्यकता एव नास्ति" इति।

"स्यात् नाम। गतेषु त्रिचतुर्षु दिनेषु ग्रामे अटनसमये यद्यत् श्रुतं दृष्टं वा, तत्सर्वं मनसि स्फुटम् आसीत्। अतः मदसन्दर्भे सर्वं प्रकाशितम् अभवत् इति भ्रमः एव स्यात्" इति उक्तवान् गोपालः।

एतत्सर्वं श्रुत्वा नितरां लज्जाम् अनुभवन् ग्रामाधिकारी शरच्चन्द्रः शिरः अवनमय्य ततः निर्गतवान्। तस्मात् दिनतः तस्य उपहासप्रवृत्तिः अपगता। जनाः गोपालस्य प्रशंसां कृतवन्तः।



# वाक्चातुर्यम्

कीर्तिवर्मा यदा वैशालिनीदेशं पालयन् आसीत् तदा कदाचित् प्रहासः नाम कश्चन वाक्चतुरः तं देशं द्रष्टुम् आगतवान्। वैशालिनीदेशो सस्यसम्पत्तिः धनसम्पत्तिः च अधिकतया दृष्टा तेन।

सः राजानं दृष्ट्वा उक्तवान्– "प्रभो, भवतः राज्यं सकलसम्पत्समृद्ध्या शोभते। किन्तु मम तर्कः यत् भवतः राज्ये जडबुद्धयः अधिकाः इति। भवतः राज्ये द्वादशोत्तरशतं (११२) जडबुद्धयः स्युः" इति।

राजा क्षणकालम् आलोच्य– "मम देशे द्वादशोत्तरं शतं ग्रामाः सन्ति। भवतः कथनात् अहं तर्कयामि यत् प्रतिग्रामम् एकः जडबुद्धिः अस्ति इति। एवं ननु?" इति पृष्टवान्।

"आं श्रीमन्! भवतः राज्ये प्रजानां समस्याः एव न सन्ति। अतः विवादः अपि सर्वथा शून्यः। अतः ग्रामाधिकारिणां बुद्धेः कार्यम् एव नास्ति। अतः ते ग्रामाधिकारिणः जडबुद्धयः जाताः सन्ति" इति उक्तवान् प्रहासः।

राजा कीर्तिवर्मा मन्दहासं प्रकट्य मौनं स्थितवान्। तदा आस्थानविदूषकः अचलः उत्थाय उक्तवान्– "प्रभो, प्रहासस्य गणनायां दोषः अस्ति। अस्माकं देशे त्रयोदशोत्तरशतं जडबुद्धयः सन्ति" इति।

"कः सः अन्यः?" इति आश्चर्येण पृष्टवान् राजा।

"एषः प्रहासः एव सः। प्रशंसनात् अतुष्यन्तं भवन्तं प्रशंसया तोषयितुम् उद्युक्तः एषः जडबुद्धिः एव" इति उक्तवान् अचलः।

प्रहासः तु एतत् श्रुत्वा मन्दहासपूर्वकम् एव उक्तवान्– "प्रभो, अहं पारितोषिकस्य आशया आगतः वा न वा इति तु अन्यः विषयः। कदाचित् भवान् मह्यं पारितोषिकं दद्यात् चेदपि मम वाक्चातुर्याय एव दद्यात्, न तु प्रशंसावचननिमित्तम्। समृद्धं भवतः राज्यं दृष्ट्वा अपि यः प्रशंसां न करिष्यति स एव जडबुद्धिः, न तु प्रशंसां यः करोति सः। अतः मम गणनायां कोऽपि दोषः नास्ति" इति।

एतत् श्रुत्वा राजा कीर्तिवर्मा उच्चैः हसन्– "भवान् पारितोषिकं प्राप्तुम् अर्हः एव। तच्च पारितोषिकं प्रशंसानिमित्तम्, उत वाक्चातुर्यस्य निमित्तम् इति चिन्तनम् अनुचितम्" इति वदन् कण्ठे स्थितं हारं प्रहासाय पारितोषिकरूपेण दत्तवान्।






वानराः जीविते आशां परित्यज्य मरणार्थं सन्नद्धाः सन्तः रामकथां स्मरन्तः जटायुसाहाय्यं स्मृतवन्तः। जटायुनाम श्रुत्वा सम्पातिः समीपम् आगतः। सम्पातेः मुखात् सीतावार्तां श्रुत्वा वानराः नितरां सन्तुष्टाः। सन्तोषातिरेकेण ते नृत्यं कृतवन्तः।

लङ्कां गन्तुं सर्वेषाम् अपि उत्साहः। एवम् उत्साहेन ते समुद्रतीरम् आगतवन्तः। किन्तु तत्र अपारं समुद्रं दृष्टवतां तु तेषाम् उत्साहः क्षीणः जातः।

दिगन्तपर्यन्तम् अपि समुद्रः एव। तस्य अपरं तीरं न दृश्यते। महातरङ्गाः निरन्तरम् आगच्छन्ति तत्र। 'समुद्रे क्रूराः जन्तवः अपि निवसन्ति' इति जानन्ति वानराः।

"अग्रे किं करणीयम्?" इति वानराः परस्परं वदन्तः तूष्णीं स्थितवन्तः।

तदा अङ्गदः उक्तवान्– "समुद्रदर्शनात् भीतिः किमर्थम्? गगनं गगनाकारं सागरः सागरोपमः इति न श्रुतं वा? अस्मत्तः उत्पन्ना भीतिः अस्मान् एव गिलेत्। एषः पराक्रमप्रदर्शनार्थं समयः, न तु भीतिं प्राप्तुम्। इतः परं सर्वाणि कार्याणि दृढं मनोबलम् आश्रित्य एव करणीयानि" इति।

तावता रात्रिः आसन्ना आसीत्। सर्वे वानराः समुद्रतीरे रात्रिं यापितवन्तः। प्रातः अङ्गदः सर्वान् वानरान् मेलितवान्। एवं वानरान् सर्वान् मेलयितुम् अङ्गदः हनूमान् चापि समर्थौ, नान्ये।

"वयं सर्वे आत्मानं महावीरं मन्यामहे। इदानीं तादृशवीरत्वप्रदर्शनार्थं योग्यः

१०. लङ्काम् उद्दिश्य हनूमतः प्रयाणम्।



उक्तवान्। सर्वे विग्रहवत् मौनं स्थितवन्तः।

तदा अङ्गदः पुनः उक्तवान्– "भवन्तः सर्वे अपि महाबलशालिनः एव। केचन तु बाल्यात् एव साहसकार्याणि कुर्वन्तः प्रसिद्धाः जाताः। वेगेन गमने अपि समर्थाः भवन्तः। तथापि सर्वे मौनं स्थितवन्तः। केन समुद्रलङ्घनं करणीयम् इति निर्णयः अनन्तरं भवतु। प्रथमं सर्वे स्वस्वसामर्थ्यं वचनैः निरूपयन्तु" इति।

एतत् श्रुत्वा वानरवीराः स्वसामर्थ्यं वक्तुम् आरब्धवन्तः। गजः उक्तवान्– 'अहं दशयोजनदूरं लङ्घनं कर्तुं शक्नोमि' इति। गवयः– 'त्रिंशद्योजनदूरं लङ्घनं करोमि' इति उक्तवान्। 'चत्वारिंशद्योजनदूरं विनायासं गच्छामि' इति उक्तवान् शरभः। गन्धमादनः पञ्चाशद्योजनदूरं गच्छामि इति, मैन्दः षष्टियोजनदूरं लङ्घनं करोमि इति, द्विविदः सप्ततियोजनदूरं लङ्घने अहं समर्थः इति, सुषेणः अशीतियोजनदूरं गन्तुं शक्नुयाम् इति च उक्तवन्तः।

तदा जाम्बवान् उत्थाय उक्तवान्– "समुद्रादिलङ्घने भवतां सामर्थ्यस्य अपेक्षया न्यूनं तु नास्ति मम सामर्थ्यम्। तारुण्ये तु मम महत् सामर्थ्यम् आसीत्। इदानीं तु वृद्धः अस्मि। अतः इदानीं तावत् बलं न स्यात्। तथापि रामकार्ये उत्साहेन प्रवर्तनीयम् एव। अतः नवतियोजनदूरम् अहं लङ्घनं करोमि। यदि अन्यः कोऽपि न स्यात् तर्हि शतयोजनदूरं

समयः। सुग्रीवस्य वचनानुगुण कार्यं कर्तुम् अत्र कः समर्थः? सम्पातिवचनात् ज्ञातं यत् लङ्का इतः शतयोजनदूरे अस्ति इति। यः शतयोजनविस्तीर्णं समुद्रम् अतिक्रान्तुं शक्नोति सः एव अस्माकं भाग्यविधाता। अस्माकं पत्नीपुत्रादीनां मुखदर्शनं, रामलक्ष्मणयोः पुरतः सधैर्यं स्थितिश्च तादृशस्य महाबलशालिनः अनुग्रहात् एव भवितुम् अर्हति। समुद्रलङ्घनं विना वयं किष्किन्धां प्रतिगन्तुं तु न अर्हामः। अतः अत्र कः समुद्रं लङ्घयितुम् अर्हति? तादृशः धैर्यवान् अग्रे आगच्छतु" इति वानरसमूहम् उद्दिश्य उक्तवान् अङ्गदः।

प्रतिक्रियारूपेण वानरेषु कोऽपि किमपि न

लङ्घनं कर्तुं प्रयत्नम् अपि कर्तुं सिद्धः अस्मि अहम्'' इति।

सर्वेषां वचनस्य श्रवणस्य अनन्तरम् अङ्गदः उक्तवान्– ''शतयोजनदूरं गन्तुं शक्नोमि इति मम विश्वासः अस्ति। किन्तु सकुशलं प्रत्यागन्तुं शक्नुयां वा न वा इति सन्देहः मम'' इति।

तदा जाम्बवान् उक्तवान्– ''वत्स अङ्गद! भवतः सामर्थ्यातिशयः किं न ज्ञायते मया? शतयोजनदूरं किं, सहस्रयोजनदूरम् अपि गन्तुं शक्नोति भवान्। यावद्दूरं गम्यते तावदेव प्रत्यागन्तुम् अपि सामर्थ्यम् अस्ति एव भवतः। किन्तु भवान् युवराजः, इदानीम् अस्माकं नायकश्च। अतः भवन्तं प्रेषयितुं न अर्हामः वयम्। भवतः योगक्षेमनिर्वहणम् अस्माकं दायित्वम्। नायकः भवान् एव, कुत्रापि गतः चेत् अस्माकं मार्गदर्शकः कः? अनन्तरं वयं किमपि कार्यं कर्तुं न शक्नुयाम' इति।

एतत् श्रुत्वा अङ्गदः उक्तवान्– ''मया न गन्तव्यम् इति वदति भवान्। अन्यः कोऽपि गन्तुं न उत्सहते। एवं तर्हि कार्यसाधनं कथम्? सीतावार्ताम् अप्राप्य यदि वयं प्रतिगच्छेम, तर्हि सुग्रीवः किम् अस्मान् क्षाम्येत्? अन्यच्च सीता कुत्र अस्ति इति वार्तां ज्ञात्वा अपि कार्ये प्रवृत्ताः न भवेम चेत् अस्माकं जीवनेन किं प्रयोजनम्? कोऽपि मार्गः आश्रयणीयः एव खलु?'' इति।



जाम्बवान् मन्दहासपूर्वकम् अङ्गदम् उक्तवान्– ''भवतः चिन्ता मास्तु युवराज! कार्यसाधकं जनं प्रदर्शयिष्यामि, पश्यतु'' इति।

अनन्तरं पार्श्वे निश्चिन्ततया उपविष्टवतः हनूमतः समीपं गत्वा– ''हनूमन्! वयं सर्वे चिन्ताक्रान्ताः स्मः। अग्रे किं करणीयम् इति चिन्तयन्तः स्मः। भवान् तु निश्चिन्ततया मौनम् उपविष्टः अस्ति। किमर्थम् एवम्?'' इति पृष्टवान्।

तदा हनूमान् उक्तवान्– ''भवन्तः सर्वे स्वसामर्थ्यम् उक्तवन्तः। मदीयं सामर्थ्यं कियत् इति अहम् एव स्पष्टं न जानामि। अतः मौनं स्थितवान्। यावत् शक्यते तावद्दूरं



लङ्घनं कृत्वा प्रत्यागत्य सामर्थ्यम् इदमित्थम् इति ज्ञात्वा वक्तव्यम् इति चिन्तयन् अस्मि" इति।

तदा जाम्बवान् हसन् उक्तवान्– "भवतः सामर्थ्यम् कियत् इति अहं जानामि। अत्र स्थितेषु भवत्सदृशः कोऽपि नास्ति। गरुडस्य पक्षौ इव भवतः बाहू दृढौ। भवान् पराक्रमेण राम-लक्ष्मण-सुग्रीवैः समानः। सूर्यदेवात् एव भवता विद्या गृहीता। यदि स्वसामर्थ्यम् उच्येत तर्हि तत् गर्ववचनं भवेत् इति आलोच्य भवान् मौनं स्थितवान् स्यात्। शैशवावस्थायां फलभ्रान्त्या सूर्यं ग्रहीतुं सूर्यलोकं गतः धीरः वायुपुत्रः भवान्। एतादृशस्य भवतः समानः कः स्यात् लोके? इदानीं स्वसामर्थ्यं प्रदर्शयितुं योग्यः समयः। समुद्रलङ्घनं करोतु। शुभवार्तया सह आगच्छतु च" इति।

एतानि वचनानि श्रुतवतः हनूमतः हृदयं विकसितम् अभवत्। तस्य शरीराकृतिः अपि प्रवृद्धा। सर्वेषु पश्यत्सु हनूमान् प्रवृद्धः। उरः विस्तारीकृत्य भुजौ इतस्ततः प्रसार्य पादौ विशालीकृत्य समुद्रलङ्घनार्थं सिद्धस्य हनूमतः स्तुतिं कुर्वन्तः वानराः सन्तोषेण ध्वनिं कृतवन्तः।

उन्नतः वृक्षः इव, प्रबलः पर्वतः इव प्रवृद्धः अस्ति सः। तस्य मुखम् अग्निः इव रक्तवर्णीयं जातम्।

सः सर्वान् वानरान् विनयेन नमस्कृत्य– "भोः, मित्राणि! कस्यापि चिन्ता मास्तु। वायुः इव वेगेन गच्छन् अनायासेन समुद्रलङ्घनं करिष्यामि। कार्यसिद्धिपर्यन्तं मम विश्रान्तिः न भविष्यति। अहम् उदयगिरौ सूर्यम् अनुसरन् अस्ताचलं प्राप्स्यामि। समुद्रः मम गमनस्य अवरोधकः न भविष्यति। मेघान् इतस्ततः प्रेषयन्, पर्वतान् कम्पयन् अग्रे गमिष्यामि। सीतादेवीं दृष्ट्वा एव प्रत्यागमनं मम। शुभशकुनानि दृश्यन्ते। यदि अनिवार्यं भवेत् तर्हि लङ्काम् एव उत्पाट्य भुजयोः उपरि आरोप्य आनेष्यामि। श्रीरामस्य मुखं विकसितं करिष्यामि" इति।

हनूमतः वचनं श्रुत्वा वानराः धैर्ययुक्ताः जाताः। ते सर्वे हनूमन्तम् आश्चर्येण

सन्तोषेण च पुनः पुनः पश्यन्ति।

जाम्बवान् हनूमन्तं दृष्ट्वा उक्तवान्– "आञ्जनेय! भवतः वचनं श्रुतवताम् अस्माकं भयातङ्कादयः अपगताः। भवतः कार्यं निर्विघ्नं समाप्तं भवतु इति भगवन्तं प्रार्थयामः वयम्। रामकार्ये भगवान् निश्चयेन अनुग्रहीष्यति। इदानीं भवान् एव अस्माकं जीवः। शिवाः पन्थानः सन्तु भवतः" इति।



"मम उत्पतनसमये एषा भूमिः पादाघातं न सहेत। प्रजाः च भीत्या पलायनं कुर्युः। अतः अहं महेन्द्रपर्वतशिखरात् प्रस्थानं करिष्यामि" इति उक्त्वा हनूमान् वेगेन महेन्द्रपर्वतम् आरूढवान्।

पर्वतशिखरं प्राप्य सः तत् हस्ताभ्यां कम्पयित्वा पादेन सकृत् प्रहृतवान्। अचलः स च पर्वतः क्षणकालं कम्पितः अभवत्। वृक्षलताभ्यः पुष्पाणि पर्णानि च सशब्दं पतितानि। बह्व्यः शिलाः उपरिष्टात् पतिताः। गुहाखातादिभ्यः वन्यमृगाः बहिः आगत्य विकारध्वनिं कृतवन्तः। तपसि लीनाः ऋषयः आश्चर्यचकिताः। 'पर्वतः विदार्यमाणः स्यात् वा?' इति संशयं प्राप्तवन्तः ते। विद्याधराः प्रियकरीभिः सह आकाशं गतवन्तः। आकाशे स्थिताः ते महाशक्तिमन्तं विराड्रूपं हनूमन्तम् आश्चर्येण दृष्टवन्तः।

हनूमान् समुद्रस्य अभिमुखं स्थित्वा पुच्छं प्रसार्य हस्तेन गृहीत्वा पादौ अवनमय्य श्वासं सकृत् निरुध्य आकाशमार्गम् एकवारं दृष्ट्वा अधः स्थितान् वानरान् उद्दिश्य– "अङ्गदादयः वानरवीराः! लङ्कां प्रति प्रस्थितः अस्मि। लङ्कायां सीतादेवी न दृष्टा चेत् ततः स्वर्गलोकं गमिष्यामि। तत्रापि सीता न दृष्टा चेत् लङ्कां पुनरागत्य रावणं बद्ध्वा आनेष्यामि। अथवा रावणसहितां लङ्काम् एव उन्नीय आनेष्यामि" इति।

अनन्तरं हनूमान् कानिचन पदानि पृष्ठतः गत्वा पादाभ्यां पर्वतशिखरं बलात् नोदयित्वा आकाशमार्गम् आश्रित्य दक्षिणदिशि प्रस्थितवान्। प्रेषयितुं गताः बान्धवाः इव वृक्षगुल्मादयः अपि तं किञ्चिद्दूरम्



अनुसृतवन्तः। हनूमान् समुद्रः च पुष्पेण आच्छन्नौ। हनूमतः हस्तौ घोरसर्पौ इव दृश्येते। तस्य नेत्रे सूर्यचन्द्रौ इव विराजेते। तदीयं पुच्छं लीलया इतस्ततः सञ्चरति।

वेगेन गच्छतः तस्य हस्ताभ्याम् आहतः वायुः सुयूँ सुयूँ इति सशब्दं वाति स्म। आकाशे गच्छन् पुच्छयुक्तः हनूमान् धूमकेतुः इव दृश्यते। तदीया दीर्घा छाया तरङ्गकारणतः निम्नोन्नता दृश्यते स्म। समुद्रः अपि छायाव्याजेन तम् अनुसरति स्म इव।

वेगेन गच्छन्तं हनूमन्तं दृष्ट्वा समुद्रराजः चिन्तितवान्— 'एषः हनूमान् इक्ष्वाकुवंशीयस्य रामस्य साहाय्यार्थं प्रस्थितः अस्ति। इक्ष्वाकुवंशीयानां कारणतः एव मम उत्पत्तिः जाता। सगरपुत्रैः खाते स्थले अहं रूपितः अभवम्। अतः एव सागरः इति नाम आगतं मम। एतस्य साहाय्यम् इदानीं करणीयं मया। एतस्य विश्रान्त्यर्थं यदि मया अवकाशः कल्प्येत तर्हि एषः द्विगुणितेन उत्साहेन अग्रे गन्तुम् अर्हति' इति।

अतः सः आत्मनि निलीय स्थितं पर्वतं मैनाकं दृष्ट्वा उक्तवान्— "मैनाक! इन्द्रात् भीतः भवान् मम आश्रये स्थितवान्। राक्षसाः पातालात् उपरि यथा न आगच्छेयुः तथा दृष्टव्यं भवता इति इन्द्रः भवन्तम् आदिश्य गतवान्। अतः इदानीं भवता स्वस्थाने एव तिष्ठता शरीरं केवलं वर्धनीयम्। शिखरम् उपरि प्रदर्शनीयम्। हनूमान् एतेन मार्गेण एव गच्छन् अस्ति। भवान् सुवर्णमयं स्वशिखरम् उन्नीय तस्य विश्रान्त्यर्थम् अवकाशं कल्पयतु। अविलम्बेन भवता आत्मा वर्धनीयः। झटिति शरीरं वर्धयतु तावत्" इति।

मैनाकः स्वशरीरं वर्धयित्वा शिखरं जलस्य उपरि आनीतवान्। अकस्मात् जले उद्गतम् एतत् शिखरं दृष्टं हनूमता। विघ्नकारिणी काचित् दुष्टमाया एषा इति भावितं तेन। अतः सः हुँकृत्य श्वासं निरुध्य बलात् शिखरं घट्टयन् तत् पार्श्वे पातितवान्।

अपारशक्तिमतः हनूमतः आघातात् रोमाञ्चं प्राप्य मैनाकः सन्तोषेण मानवरूपं प्राप्य शिखरस्य उपरि प्रत्यक्षीभूय—

"वायुपुत्र, आञ्जनेय! अहो सामर्थ्यं भवतः! सर्वथा दुःसाध्यं कार्यं साधयितुम् उद्युक्तः अस्ति भवान्। अपारं सागरं तर्तुम् उद्युक्ते भवति अल्पः अपि आयासः न दृश्यते। मम शिखरे किञ्चित्कालं स्थित्वा विश्रम्य अग्रे गच्छतु। अहं हिमवतः पुत्रः मैनाकः अस्मि। समुद्रराजस्य आज्ञायाः अनुगुणं भवतः विश्रान्त्यर्थम् अवकाशं कल्पयितुं मम शिखरम् उपरि आनीतवान्। रामेण तत्पूर्वजैः च समुद्रः बहुधा उपकृतः अस्ति। अतः रामकार्यार्थं प्रस्थितवतः भवतः साहाय्यं कर्तुम् इच्छति समुद्रराजः। कृपया मम शिखरे विश्रम्य श्रमम् अपनीय अग्रे गच्छतु। मां कृतार्थं करोतु। समुद्रराजस्य इच्छां सफलीकरोतु" इति प्रार्थितवान्।

मैनाकस्य वचनस्य श्रवणस्य अनन्तरम् अपि हनूमतः मुखं प्रसन्नं न जातम्। तदा मैनाकः पुनः उक्तवान्– "आञ्जनेय! भवान् वायुपुत्रः। भवतः सत्कारः मम आद्यं कर्तव्यम्। यतः पूर्वं वायुदेवः मम महत् साहाय्यं कृतवान् आसीत्। कृतयुगे सर्वेषां पर्वतानां पक्षौ आस्ताम्। अतः पर्वताः स्वेच्छया अटन्तः यत्र कुत्रापि भूमौ तिष्ठन्ति स्म। अतः ऋषीणां जनानां च सदा भीतिः– पर्वतः कोऽपि अस्माकम् उपरि आपतेत् इति। अतः देवेन्द्रः लोकहितार्थं वज्रायुधेन पर्वतानां पक्षौ छेत्तुम् उद्युक्तः। सः पक्षच्छेदनार्थं मम समीपम् अपि आगतः। तदा अहं पलायनं कुर्वन् वायुदेवं शरणं गतवान्। करुणालुः वायुदेवः मां वेगेन नयन् अत्र समुद्रे पातितवान्। अनन्तरम् इन्द्रः, राक्षसाः पातालात् उपरि यथा न आगच्छेयुः तदा रक्षणं कुर्वन् तिष्ठतु इति माम् आदिश्य मम पक्षौ अच्छित्वा एव गतवान्। एवं तदा वायुदेवेन महत् साहाय्यं कृतम्। वायुपुत्रस्य भवतः सामर्थ्यं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि। अतः मयि किञ्चित्कालं तिष्ठन् मां कृतार्थं करोतु। अल्पकालं विश्रान्तिः स्वीकृता चेत् कार्यस्य न काऽपि हानिः, प्रत्युतः उत्साहप्राप्त्या महान् लाभः एव" इति।





# परशिवस्य कृपा

नन्दिग्रामनामके ग्रामे नरसिंहः नाम कश्चन नारिकेलविक्रेता आसीत्। सद्यः एव परिणीतवान् अस्ति सः। तस्य पत्न्याः नाम नर्मदा इति। निर्धनकुले जाता सा।

पतिगृहस्य प्रवेशस्य अनन्तरं द्वितीये दिने नर्मदा पतिम् उक्तवती– "अद्य किञ्चित् शीघ्रं गृहम् आगच्छतु। सायम् आवां मन्दिरं गत्वा आगच्छाव" इति।

एतत् श्रुत्वा नितरां क्रुद्धः नरसिंहः– "किं रे, दिनद्वयात् पूर्वम् एतत् गृहं प्रविष्टा भवती माम् आदेष्टुम् अपि उद्युक्ता वा? भवत्याः इच्छायाः अनुगुणं व्यवहर्तुं किम् अहं भवत्याः सेवकः? यदा इच्छामि तदा गृहम् आगच्छामि, गच्छामि च। समये पाकः, गृहव्यवहारस्य निर्वहणं च भवत्याः कार्यम्। तावत् विना लोपं करोतु। मद्विषये भवत्याः अधिकारचालनं मास्तु" इति उक्त्वा ततः निर्गतवान्।

आत्मना किम् अनुचितं कृतम् इति न ज्ञातं नर्मदया।

नरसिंहः शीघ्रकोपी। यत् मनसि आगच्छति तत् अविलम्बेन सिध्येत् एव। तस्मिन् विषये कस्यापि असम्मतिं विरोधं वा न सहते सः।

पतिः पत्नीविषये कथं व्यवहरेत् इत्यस्मिन् विषये विचित्रा धारणा नरसिंहस्य। यदि प्रीत्या व्यवह्रियेत तर्हि पत्नी अधिकारं चालयेत् इति भीतिः। अतः सः पत्न्या सह गाम्भीर्येण एव व्यवहरति। 'पत्नी सदापि पत्युः विधेया स्यात्। पत्युः पुरतः मुखम् उन्नीय किमपि वक्तुं तस्याः धैर्यं कदापि न स्यात्। पत्युः अभिप्रायस्य विरोधं सा कदापि न कुर्यात्' इति नरसिंहस्य चिन्तनम्।

परशुरामः नर्मदायाः पितुः आत्मीयः। सः नन्दिग्रामात् अनतिदूरे स्थिते पर्वते स्थितस्य

"भामहः"



शिवालयस्य अर्चकः। पत्न्याः अस्वास्थ्य-कारणतः सः नर्मदायाः विवाहसमये उपस्थातुं न शक्तः आसीत्। कस्यापि कार्यस्य निमित्तं नन्दिग्रामम् आगतः सः नर्मदां तस्याः पतिं च द्रष्टुम् इच्छन् नरसिंहस्य गृहम् आगतवान्। एकाकिभावनया खिन्ना नर्मदा परशुरामस्य आगमनात् नितरां सन्तुष्टा। सा आदरेण सन्तोषेण च परशुरामं स्वागतीकृत्य– "कुशलं खलु? पत्न्याः आरोग्यं कथम् अस्ति?" इत्येवं योगक्षेमं पृष्टवती।

अतिथये परशुरामाय पानार्थं जलं दत्त्वा अन्तः प्रकोष्ठं गतवती। नरसिंहः गणनालेखने मग्नः आसीत्। सा पत्युः समीपं गत्वा– "मम पितुः आत्मीयः परशुरामवर्यः आगतः अस्ति। मां पुत्रीम् इव प्रीत्या पश्यति स्म सः। पत्न्याः अस्वास्त्यस्य कारणतः विवाहसमये अनुपस्थितः सः इदानीम् आगतः अस्ति। भवान् तेन सह वार्तालापं कुर्वन् तिष्ठतु। अहं त्वरया पाकं सज्जीकरिष्यामि" इति उक्तवती।

एतत् श्रुत्वा सर्पः इव क्रुद्धः नरसिंहः उच्चस्वरेण– "वाणिज्ये स्पर्धाकारणतः क्लेशम् अनुभवन् अहं व्यवहारनिर्वहणं कथम् इति चिन्तयन् अस्मि। भवती तु आगन्तुकं कञ्चित् आहूय सत्कर्तुम् इच्छति। तत्रापि तेन सह वार्तालापार्थं माम् आदिशति। एतादृशान् सत्कर्तुं मम आर्थिकसामर्थ्यं नास्ति, वार्तालापं कर्तुं समयः अपि नास्ति" इति उक्तवान्।

एतत् श्रुतवत्याः नर्मदायाः महान् खेदः आतङ्कः च– 'मम पत्युः व्यवहारं दृष्ट्वा सात्त्विकः परशुरामः किं वा चिन्तयेत्? तद्द्वारा सर्वं ज्ञात्वा मम पिता कीदृशं खेदम् अनुभवेत्?' इति।

अतः सा मन्दस्वरेण पतिम् उक्तवती– "कृपया किञ्चित् मन्दस्वरेण वदतु। अतिथिना सर्वं श्रूयेत" इति।

"मुखं पिधाय पाकशालां गच्छतु भवती। मया कथं व्यवहरणीयम् इति मा उपदिशतु पुनः। पत्न्याः वचनानुगुणं यः व्यवहरति तस्य सर्वनाशः निश्चितः। इदानीं निर्गच्छतु भवती इतः" इति पुनरपि उच्चस्वरेण उक्तवान्

नरसिंहः।

पति-पत्न्योः वार्तालापं सर्वं श्रुत्वा ततः एव नर्मदाम् उद्दिश्य उक्तवान् परशुरामः– "वत्से, अहं पुनः आगमिष्यामि तावत्" इति।

अश्रूणि मुञ्चन्ती प्रकोष्ठात् बहिः आगता नर्मदा दैन्येन परशुरामम् उक्तवती– "तात! अत्र यत् दृष्टं श्रुतं च तत् कृपया विस्मरतु। अत्रत्यं विषयं मम पितरं तु कदापि मा वदतु" इति।

"वत्से, चिन्तां मा करोतु। भवत्याः पितरं किमपि न वदामि। परशिवस्य कृपया सर्वं समीचीनं भविष्यति। मनसि धैर्यं स्थापयतु" इति सान्त्वनवचनानि उक्त्वा ततः निर्गतवान् परशुरामः।



ततः एकस्य मासस्य अनन्तरं कदाचित् नरसिंहः गृहस्य पुरतः उपविष्टः आसीत्। तदा तत्र आगतः परशुरामः– "नर्मदायाः पतिः नरसिंहः भवान् एव खलु? भवन्तं कञ्चित् विषयं वक्तुम् अत्र आगतः अस्मि अहम्" इति।

तस्य अभिज्ञानं प्राप्नुवन् नरसिंहः– "पर्वतस्य उपरि स्थितस्य शिवालयस्य अर्चकः परशुरामवर्यः खलु भवान्? कः विशेषः?" इति पृष्टवान्।

"अस्माकं शिवालयस्य पार्श्वे नारिकेलापणः आरम्भणीयः इति विचारः अस्ति। आपणिकस्य वसत्यर्थं समीपे एव गृहम् अपि दीयते। नारिकेलविक्रयणेन सहैव गन्धवर्तिका-पुष्पादीनां विक्रयणं कर्तुम् अपि शक्यते। नारिकेलवाणिज्ये भवान् क्लेशम् अनुभवन् अस्ति इति स्मृतं मया। भवान् आगत्य एकवारं स्थलं पश्यतु। रोचते चेत् वाणिज्यम् आरब्धुं शक्यते" इति उक्तवान् परशुरामः।

'योग्यः अवकाशः एषः' इति आलोचयन् पत्नीम् आहूय पानीयं सज्जीकर्तुम् उक्तवान् नरसिंहः। पानीयस्य अनन्तरं तौ शिवालयं गतवन्तौ।

शिवालयपरिसरः नरसिंहाय अरोचत। 'प्रतिमासं शतं रूप्यकाणि भाटकरूपेण दातव्यम्' इति निश्चितम्। 'ग्रामे स्थितं गृहं भाटकार्थं कस्मैचित् दत्त्वा मन्दिरपरिसरे एव



वासः कर्तुं शक्यते' इति निश्चितवान् नरसिंहः।

नरसिंहः परशुरामः च व्यवहारं समाप्य बहिः आगतवन्तौ। परशुरामः नरसिंहम् उक्तवान्– "इदानीम् अन्धकारः प्रसरन् अस्ति। अतः अद्य भवान् मम गृहे एव तिष्ठतु। श्वः गृहं गन्तुं शक्यते। शिवरात्र्युत्सवः आसन्नः खलु? अतः व्यवस्थाविषये मया धर्माधिकारिणा सह किञ्चित् वार्तालापः करणीयः अस्ति। अतः मम आगमने विलम्बः भवेत्। एतस्य पर्वतस्य मूलभागे मम गृहम्। पर्वतात् अवतरणस्य अनन्तरं मार्गद्वयं दृश्यते। वाममार्गेण किञ्चित् अग्रे गतं चेत् उन्नतः तिन्त्रिणीवृक्षः दूरात् दृश्यते। तस्य पार्श्वे एव मम गृहम्। अतः भवान् अग्रे गच्छतु। भवान् आगच्छेत् इति पत्नीम् उक्त्वा आगतवान् अस्मि। भवान् अग्रे गत्वा मम गृहे विश्रान्तिसुखम् अनुभवतु" इति।

एवम् एव भवतु इति अङ्गीकृत्य नरसिंहः ततः प्रस्थितवान्। पञ्चसु निमेषेषु वृष्टिः अपि आगता। नरसिंहः वेगेन पदानि स्थापितवान्। पर्वतस्य अधः वामतः परिवृत्य गतवान्। समीपे एव वृक्षः, तस्य अधः प्राचीनम् एकं गृहं च दृष्टम्। तावता वृष्टिः तीव्रा जाता।

गृहद्वारस्य समीपं गत्वा नरसिंहः द्वित्रवारं द्वारताडनशब्दं कृतवान्। कश्चन वृद्धः मन्दप्रकाशयुक्तम् एकं दीपं गृहीत्वा बहिः आगत्य– "कः भवान्? कः द्रष्टव्यः भवता?" इति पृष्टवान्।

"शिवालयस्य अर्चकस्य परशुरामवर्यस्य गृहं खलु एतत्?" इति पृष्टवान् नरसिंहः।

"परशुरामस्य गृहम् अन्यस्मिन् मार्गे अस्ति। वृष्ट्या आर्द्रः खलु भवान्? प्रथमम् अन्तः आगच्छतु तावत्" इति उक्तवान् सः वृद्धः।

अन्तः गतवान् नरसिंहः। तावता तेन स्मृतं यत् परशुरामवर्यः प्रथमं यदा मम गृहम् आगतवान् तदा अहम् अनादरेण दृष्टवान्। एवं स्थिते इदानीं तस्य गृहं गत्वा आतिथ्यस्वीकारः उचितः न भवेत् इति।

अतः नरसिंहः वृद्धं पृष्टवान्– "इदानीं वृष्टौ परशुरामगृहपर्यन्तं गमनं न इच्छामि। अतः अद्य रात्रौ अत्रैव स्थातुम् अर्हामि वा?" इति।

तदा वृद्धः उक्तवान्– "भवान् अत्र तिष्ठति चेत् मम न कोऽपि हानिः। भवान् मञ्चे शयनं करोतु। अहं सुखासने शयनं करोमि। सर्वं विधिविलसितम्! षट् पुत्राः सन्ति चेदपि अहम् एतस्मिन् वार्धक्ये अनाथः इव जीवनं यापयन् अस्मि" इति।

एवं सगद्गदम् उक्त्वा अश्रूणि स्रावयन् वृद्धः स्वस्य दीनावस्थां पुनर्वर्णितवान्– "यदा अहं तरुणः आसं तदा कोपशीलः आसम्। पत्नीं पदे पदे तर्जयामि स्म। पुत्रान् पुनः पुनः ताडयन् निगृह्णामि स्म। प्रीत्या न व्यवहृतं मया। अतः पुत्राः उद्योगादिकं प्राप्य मत्तः दूरं गताः। पत्न्याः मरणस्य अनन्तरम् अहं पिशाचः इव अत्र निवसामि। पुत्राः इदानीं मम सहवासं न इच्छन्ति। तारुण्ये यत् कृतं तस्य फलम् एतत्" इति।

एतत्सर्वं श्रुतवतः नरसिंहस्य निद्रा अपगता। उषःकाले तेन अल्पा निद्रा प्राप्ता। यदा एषः नेत्रे उन्मीलितवान् तदा कश्चित् तम् आह्वयन् आसीत्।

नरसिंहः नेत्रे उन्मील्य इतस्ततः पश्यति। तावता समीपम् आगतः नरसिंहः– "किं भोः, रात्रौ एतस्मिन् पिशाचगृहे वासः कृतः भवता! ह्यः कथं मार्गभ्रष्टः अभवत् भवान्? अथवा



दोषः ममैव स्यात् अपि। गृहाभिज्ञानकथनसमये वामतः परिवर्तनीयम् इति उक्तम्, उत दक्षिणतः इति इदानीं न स्मरामि। तदस्तु, दैववशात् भवान् सजीवं मिलितः। रात्रौ वृष्टिः इत्यतः भवन्तम् अन्वेष्टुं न शक्तः अहम्। इदानीम् अन्विष्यन् अत्र आगतः" इति उक्तवान्।

"मया अत्र पिशाचः कोऽपि न दृष्टः। केनचित् वृद्धेन आश्रयः दत्तः" इति उक्तवान् नरसिंहः।

तदा परशुरामः आश्चर्यं प्रकटयन्– "वृद्धः मिलितः? तेन सह वार्तालापः कृतः वा?" इति पृष्टवान्। "आम्" इति वदन् नरसिंहः वृद्धस्य लक्षणानि उक्तवान्।

"आम्, एवं तर्हि भवता पिशाचः एव दृष्टः। यतः स च वृद्धः दशभ्यः वर्षेभ्यः पूर्वम् एव दिवङ्गतः। पुत्रादिभिः तिरस्कृतस्य तस्य अन्त्यसंस्कारः मया एव कृतः। पत्नीपुत्रादयः प्रीत्या न दृष्टाः यत् तस्य योग्यं फलं प्राप्तं तेन। जनाः वदन्ति स्म– 'सः पिशाचरूपं प्राप्तवान् अस्ति' इति। मम तत्र विश्वासः न आसीत्। अद्य तु विश्वसनीयम् एव। यतः भवान् स्वयं दृष्ट्वा वदन् अस्ति" इति उक्तवान् परशुरामः।

आरात्रि पिशाचेन सह वासः कृतः इति स्मरन् नरसिंहः कम्पितः जातः।

सप्ताहाभ्यन्तरे शिवालयपरिसरे नरसिंहस्य आपणः आरब्धः। गृहपरिवर्तनम् अपि कृतम्। नरसिंहस्य व्यवहारे महत् परिवर्तनं दृश्यते स्म। सः पत्न्या सह प्रीत्या व्यवहरति स्म। एकम् अपि कोपवचनं न आगच्छति स्म तस्य मुखात्।

कदाचित् देवदर्शनार्थम् आगतां नर्मदां पृष्टवान् परशुरामः– "वत्से, कथम् अस्ति भवती? इदानीं पतिः प्रीत्या व्यवहरन् अस्ति खलु?" इति।

"आम्। सर्वं परशिवस्य कृपा!" इति हसन्ती उक्तवती नर्मदा।

एतत् श्रुत्वा आश्चर्येण पृष्टवान् परशुरामः– "परशिवं जानाति वा भवती?" इति।

तदा नर्मदा मन्दिरस्थां मूर्तिं प्रदर्शयन्ती– "किं वदति भोः? एतं परशिवं को वा न जानाति? सर्वं तस्य एव लीला!" इति उक्तवती।

"आम् आम्। जगन्नाटकसूत्रधारः सः" इति मन्दहासपूर्वकम् उक्त्वा दीर्घं निःश्वसितवान् परशुरामः।

वस्तुतस्तु नरसिंहे विवेकं जागरयितुं परशुरामेण प्रतिवेशिग्रामवासिनः परशिवनामकस्य साहाय्येन पिशाचनाटकम् अभिनीतम् आसीत्। एतां वस्तुस्थितिं कमपि न उक्तवान् सः। नर्मदया अपि किमपि न ज्ञातम्।





# दुःस्वप्नपीडा

बर्मादिशो कस्मिंश्चित् ग्रामे बामाकः नाम कश्चित् वणिक् आसीत्। तस्य समग्रा दृष्टिः धनसम्पादने एव। अतः तेन पूजादिकं किमपि न कृतम्, व्रतादिकं न आचरितं, पुण्यकार्याणि न कृतानि। एवम् एव जीवन् सः वृद्धः जातः।

कदाचित् सः घोरेण व्याधिना ग्रस्तः जातः। मम मरणम् आसन्नम् इति भावना आगता तस्य मनसि। मरणात् पूर्वं दैवभक्तानां कथा श्रुता चेत् सद्गतिः लभ्येत इति चिन्तितवान् बामाकः।

सः सेवकम् उक्तवान् यत् मम इच्छां निवेद्य मन्दिरस्य अर्चकम् आनयतु इति। सेवकः तथैव कृतवान्।

बामाकविषये अर्चकस्य कोपः आसीत् एव। अतः सः बामाकम् उपेक्षया पश्यन्— "देवालयं गतवतः भवतः कियान् कालः अतीतः?" इति पृष्टवान्।

"जन्मनि मया देवालयः गतः वा न वा इति न स्मर्यते श्रीमन्!" इति उक्तवान् बामाकः।

"जन्मनि एकवारम् अपि देवालयः न गतः! सर्वथा नास्तिकः भवान्। एतादृशः भवान् भगवद्भक्तानां कथां श्रोतुम् अपि अनर्हः एव" इति कोपेन उक्त्वा ततः निर्गतवान्।

सौभाग्यवशात् बामाकः योग्यया चिकित्सया यथापूर्वं स्वस्थः जातः। एतत् दृष्टवतां ग्रामीणानां महत् आश्चर्यम्।

कदाचित् मार्गे अर्चकः बामाकस्य अभिमुखम् आगतः। "किम् एतत्! मरणावस्थायां स्थितः भवान् कथं स्वस्थः जातः?" इति आश्चर्येण पृष्टवान् सः।

"सर्वं भगवतः लीला! किन्तु श्रीमन्! तदा तदा मां दुःस्वप्नाः बाधन्ते" इति खेदेन उक्तवान् बामाकः।

"कीदृशाः दुःस्वप्नाः दृश्यन्ते भवता?"

"बर्मादेशीया जानपदकथा"

इति कुतूहलेन पृष्टवान् अर्चकः।

"ह्यस्तनस्वप्नस्य वृत्तान्तं शृणोतु। ह्यः स्वप्ने मया स्वर्गलोकः गतः। तत्र द्वारपालकः मां पृष्टवान्– 'अर्चकस्य संन्यासिनः वा मुखात् भगवद्भक्तानां कथाः श्रुताः वा भवता?' इति। 'न' इति उक्तवान् अहम्। 'तादृशीः कथाः श्रुत्वा अर्चकादीनाम् आशीर्वादः प्राप्तः चेदेव स्वर्गे प्रवेशः। अतः अत्रैव तिष्ठतु। अन्तः कोऽपि अर्चकः संन्यासी वा स्यात् वा इति पश्यामि' इति उक्त्वा सः अन्तः गतः। अल्पे एव काले प्रत्यागत्य– 'दुरदृष्टं भवतः। तादृशः अर्चकः संन्यासी वा स्वर्गे एकः अपि नास्ति' इति उक्त्वा मां ततः प्रेषितवान्" इति उक्तवान् बामाकः।

स्वप्नवृत्तान्तस्य आन्तर्यं जानन् अर्चकः बामाकं कोपेन पश्यन् मौनं ततः निर्गतवान्।

अर्चकस्य ग्रामाधिकारिणः च महत् वैरम् आसीत्। सः बामाकं स्वगृहम् आनाय्य– 'भवता दुःस्वप्नाः दृश्यन्ते इति मया श्रुतम्। भवतः दुःस्वप्नस्य विषयं ज्ञात्वा अर्चकः मुखभङ्गं प्राप्य गतः इत्यपि श्रुतम्। भवता तस्य गर्वः योग्येन क्रमेण भञ्जितः। एषु दिनेषु भवता तादृशः अन्यः कोऽपि स्वप्नः दृष्टः वा?" इति पृष्टवान्।

"आम् आम्। ह्यः मया तादृशः एव अन्यः स्वप्नः दृष्टः" इति उक्तवान् बामाकः।

"कः सः स्वप्नः?" इति कुतूहलेन पृष्टवान् ग्रामाधिकारी।

"ह्यः स्वप्ने मया नरकलोकः गतः। अहं यदा द्वारस्य समीपं गतः तदा मया परस्परविवादे कलहे च निमग्नाः अर्चकाः कपटसंन्यासिनः च दृष्टाः। तेषां कलहं दृष्ट्वा श्रान्तः अहं द्वारसमीपे स्थिते आसने उपवेष्टुम् उद्युक्तः। तावता धावन् आगतः कश्चन यमदूतः मां निवारयन्– 'एतत् आसनं न भवते, ग्रामाधिकारिणे एतत्' इति उक्त्वा मां बलात् ततः नोदितवान्। तावता मम जागरणं जातम्" इति उक्तवान् बामाकः।

ग्रामाधिकारी लज्जया बामाकं पश्यन् मौनम् उत्थाय अन्तः गतवान्।





# चिरञ्जीविता

स्वर्गाधिपत्यस्य प्राप्तेः अनन्तरं देवेन्द्रः विभिन्नलोकानां हितार्थं बहूनि कार्याणि कृतवान्। भूलोकस्य अपि हितं स्यात् इति देवेन्द्रस्य इच्छा। अतः सः सप्त तारकाः स्वसमीपम् आनायितवान्।

"भूलोकवासिनः सुखेन यथा स्युः तथा करणीयम् इति मम इच्छा। किन्तु विना शुल्कं किमपि दत्तं चेत् तस्य विषये अनादरः भवति। अतः भवतीनां हस्ते अहं सप्तविधानि वस्तूनि ददामि। तानि योग्येन मूल्येन विक्रीय आगन्तव्यम्" इति उक्तवान् देवेन्द्रः।

"प्रभो, यथाज्ञापयति भवान्" इति मधुरेण स्वरेण विनयेन उक्तवत्यः तारकाः।

देवेन्द्रः प्रथमां तारकाम् आहूय सुवर्णपात्रं दत्त्वा उक्तवान्– "अत्र हास्यरसः अस्ति। यः एतं सेवते सः महान्तं सन्तोषं प्राप्स्यति। सन्तोषः एव सर्वेषां मानवानां जीवनस्य सारः" इति।

अनन्तरं सः द्वितीयाम् आहूय सुवर्णकरण्डकं यच्छन्– "अत्र सौशील्यरसः अस्ति। सौशील्यं जीविनां प्राणः" इति उक्तवान्।

तृतीयाम् आहूय आरोग्यरसयुक्तं सुवर्णकरण्डकं दत्त्वा– "अरोग्यम् एव महाभाग्यम्" इति उक्तवान्। चतुर्थीम् आहूय सुवर्णकरण्डकं दत्त्वा– "अत्र चिरञ्जीवित्वम् अस्ति। एतस्य सेवनेन च दीर्घकालं यावत् जीवनं शक्यते" इति उक्तवान्। पञ्चमीम् आहूय– "अत्र कीर्तिरसः अस्ति। कीर्तिरिका अमरा। कीर्तिः मानवं सर्वत्र व्यापयति" इति उक्त्वा सुवर्णकरण्डकं दत्तवान्। षष्ठीं तारकाम् आहूय– "अत्र परमानन्दः अस्ति। एतस्य प्राप्त्यर्थम् एव मुनयः प्रयत्नं कुर्वन्ति" इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

उक्त्वा सुवर्णकरण्डकं दत्तवान्। सप्तमीम् आहूय सुवर्णकरण्डकं दत्त्वा उक्तवान् सः– "अत्र ऐश्वर्यरसः अस्ति। जीवनरथस्य सुचारुगमनार्थम् एतत् अत्यावश्यकम्" इति।

सप्त अपि तारकाः सुवर्णकरण्डकं स्वीकृत्य स्त्रीवेषं धृत्वा भूलोकं गतवत्यः। प्रथमा द्वितीया तृतीया च महता प्रयत्नेन अपि स्वसमीपे विद्यमानं द्रव्यं विक्रेतुं न शक्तवत्यः।

चतुर्थी– "भो भो, मानवाः! दीर्घजीवनम् इच्छन्ति वा भवन्तः? तर्हि चिरञ्जीवरसं पिबन्तु" इति वदन्ती मार्गे अटितवती। जनाः तं रसं प्राप्तुम् अहमहमिकया तस्याः समीपम् आगतवन्तः।

तदा चतुर्थी तारका पृष्टवती– "मम भगिनीभिः विक्रीयमाणं क्रीतं वा भवद्भिः? ज्येष्ठायाः हास्यरसं, द्वितीयायाः सौशील्यरसं, तृतीयायाः आरोग्यरसं च क्रीतवन्तः वा भवंन्तः? पञ्चमी, षष्ठी, सप्तमी च भगिन्यः कीर्तिरसस्य, परमानन्दरसस्य, ऐश्वर्यरसस्य च विक्रयणं कुर्वन्ति। ते रसाः क्रीताः वा भवद्भिः?" इति।

"न, न क्रीतम्" इति उक्तवन्तः जनाः।

"ते रसाः न क्रीताः चेत् मम समीपे विद्यमाने करण्डके स्थितस्य रसस्य स्वीकारेण न किमपि प्रयोजनम्। आरोग्य-सौशील्यादयः सन्ति चेदेव दीर्घकालिकं जीवनं सार्थकं स्यात्" इति वदन्ती चतुर्थी तारका करण्डकम्, आवरणेन पिहितवती।

तया प्रदर्शनार्थम् किञ्चित् रसः हस्ते लेपितः आसीत्। तत् किं करणीयम् इति चिन्तयन्ती आसीत् सा तारका। तावता समीपस्थे वृक्षे उपविष्टः शुकः झटिति अधः आगत्य रसं समूलं खादित्वा अगच्छत्।

स च शुकः त्रिशतं वर्षाणि सन्तोषेण अजीवत्।

मानवाः च तारकया उक्तान् गुणान् प्राप्तुम् इच्छन्तः प्रयत्नं तु अकुर्वन्तः फलं किमपि अप्राप्य कष्टम् अनुभूतवन्तः।



## 'ओकापि' प्राणिनः



आफ्रिकादेशे 'काङ्गो' कानने चित्रोष्ट्रजातीया 'ओकापि' प्राणिनः निवसन्ति। एतेषां स्थितिः एतस्य शतकस्य आरम्भे ज्ञाता।

## सुविशाला पङ्कमयी भूमिः

सुविशाला पङ्कमयी भूमिः रशियादेशे प्रिपेट्नदीतीरे अस्ति। एतस्याः पङ्कमय्याः भूम्याः विस्तारः प्रायः १८,१२५ चतुरस्रमैलुपरिमितः (४६,९५० चतुरस्र कि.मी.) स्यात्।



## कण्टकस्य उपयोक्ता पक्षी

फेसिफिक्महासागरवासी गालापगोसुजातीयः कश्चन पक्षी लघुकण्टकानि उपयुज्य वृक्षत्वचं ताडयित्वा तदन्तः जन्तवः निवसन्ति, उत न इति जानाति।



# नामकरणं परश्वः

| | |
|---|---|
| राजेन्द्रः- अद्य कः दिनाङ्कः? | What is the date today? |
| शीला- त्रिंशत्तमः। | Thirtieth. |
| रा- श्वः आवाभ्यां शान्तारामस्य गृहं गन्तव्यं खलु? | We have to go to Shantaram's house tomorrow. |
| शी- श्वः न, परश्वः। तस्य पुत्रस्य नामकरणं परश्वः। | Not tomorrow but the day after. The function to give a name to his son is on that day. |
| रा- गुरुवासरे नामकरणम् इति शान्तारामेण उक्तम् इति स्मरामि? | I remember Shantaram telling me it is on Thursday. |
| शी- आम्। नामकरणं गुरुवासरे एव। अद्य मङ्गलवासरः। अतः परश्वः गमनम्। | The function is on Thursday no doubt. Today is Tuesday. So it is the day after. |
| रा- अहो, विस्मरणशीलता मम! एतत् शान्तारामस्य प्रथमम् अपत्यं वा? | How forgetful I am! This is Shantaram's first child isn't it so? |
| शी- पुत्रस्य नामकरणार्थम् आह्वानार्थम् आगमनसमये सः पुत्र्या सह आगतः आसीत्। तदपि विस्मृतं वा भवता? | When he came to invite us for his son's birthday he was accompanied by his daughter. You forgot? |
| रा- तर्हि द्वितीयम् अपत्यं वा एतत्? | Yes, then this is his second child. |
| शी- न, तृतीयम् अपत्यम् एतत्। द्वितीया अपि पुत्री एव। | No, this is the third child. Second one is also a daughter. |
| रा- नामकरणार्थं गमनसमये उपायनं किमपि नेतव्यं खलु? | We have to carry a present when we go. |
| शी- 'आशीर्वादः एव उपायनम्' इति आह्वानपत्रे मुद्रितम् अस्ति। | 'Our blessing is our gift.' That is what the invitation says. |
| रा- तर्हि परश्वः सायं गमनम् आवयोः। | We will go in the evening then. |
| शी- आम्। परश्वः अविस्मृत्य शीघ्रम् आगन्तव्यं भवता। | Yes, don't forget to come home early day after tomorrow. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जुलै-९१ मासे प्रकटयिष्यामः।**





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **शुनकाय ददात्याहारं स्नेहात्।**

द्वितीयचित्रम् - **शिशुं पाययति क्षीरं वात्सल्यात्।**

प्रेषिका - सुमङ्गला. एं. भट्ट, श्री लं.न.सं. पाठशाला, साल्कणि, शिरसि-५८१४०२ (उ.क.),


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अनधिकारी - | Unfit | धूमकेतुः - | Comet |
| अनुज्ञा - | Permission | नारिकेलम् - | Coconut |
| अस्थि - | Bone | निर्बाधम् - | Without hindrance |
| अहमहमिका - | Pressing forward | निर्वाचितः - | Elected |
| आखेटकः - | Hunter | नोदितवान् - | Pushed |
| आगन्तुकः - | Stranger | पङ्कः - | Mud |
| आढ्यः - | Wealthy man | पथिकः - | Traveller |
| उत्पाट्य - | Having pulled out | पर्व - | Festival |
| उत्सहते - | Shows enthusiasm | पाञ्चालिका - | Doll |
| उन्मीलितवान् - | Opened | भ्रूः - | Eyebrow |
| एकाग्रता - | Concentration | मस्तिष्कम् - | Brain |
| कण्टकम् - | Thorn | वामनः - | Dwarf |
| करण्डकः - | Small box | शिष्टाचारः - | Manners |
| केसरः - | Mane | शुण्डा - | Trunk of an elephant |
| गन्धवर्तिका - | Sandal stick | शुभशकुनम् - | Good omen |
| चित्रोष्ट्रः - | Giraffe | शैघ्र्यम् - | Quickness |
| तारका - | Star | सकृत् - | Once |
| तिन्त्रिणीवृक्षः - | Tamarind tree | सन्नाहः - | Preparation |
| दूरवाणी - | Telephone | हठात् - | Suddenly |

* *